आसीदतिशयप्रेक्ष्यः स राज्यश्रीवधूवरः ॥ २५ ॥
नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।
विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥ २६ ॥
स राजककुदव्यग्रपाणिभिः पार्श्ववर्तिभिः ।
ययावुदीरितालोकः सुधर्मानवमां सभाम् ॥ २७ ॥
वितानसहितं तत्र भेजे पैतृकमासनम् ।
चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् ॥ २८ ॥
शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत् ।

स्नुषा नवोढा स्त्री वरो जामातृषिङ्गयोरिति विश्वः ॥ सोतिथिरतिशयेन प्रेक्ष्यो दर्शनीय आसीत् । वरोप्येवंविशेषणः ॥

॥ २६ ॥ नेपथ्येति । हिरण्मये सौवर्ण आदर्शे दर्पणे नेपथ्यदर्शिनो वेषं पश्यतस्तस्यातिथेश्छाया प्रतिविम्बम् । उदिते सूर्ये दर्पणकल्पे मेरौ यः कल्पतरुस्तस्य छायेव । विरराज ॥ तस्य सूर्यसंक्रान्तविम्बत्वासंभवान्मेरावित्युक्तम् ॥

॥ २७ ॥ स इति । सोतिथी राजककुदानि राजचिह्नानि छत्त्रचामरादीनि ॥ प्राधान्ये राजलिङ्गे च वृषाङ्के ककुदोस्त्रियामित्यमरः ॥ तेषु व्यग्राः पाणयो येषां तैः पार्श्ववर्तिभिर्जनैरुदीरितालोक उच्चारितजयशब्दः । सुधर्माया देवसभाया अनवमामन्यूनां सभामास्थानीं ययौ ॥ स्यात्सुधर्मा देवसभेत्यमरः ॥

॥ २८ ॥ वितानेति । तत्र सभायां वितानेनोल्लोचेन सहितम् ॥ अस्त्री वितानमुल्लोच इत्यमरः ॥ महीक्षितां राज्ञां चूडामणिभिरुद्घृष्टमुल्लेख्यं पादपीठं यस्य तत् । पितुरिदं पैतृकम् ॥ ऋतष्ठञिति ठञ्प्रत्ययः॥ आसनं सिंहासनं भेजे ॥

॥ २९ ॥ शुशुभ इति । तेनाक्रान्तम् । श्रीवत्सो नाम गृहविशेषः ।

श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव कैशवम् ॥ २९ ॥
बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः ।
रेखाभावादुपारूढः सामग्र्यमिव चन्द्रमाः ॥ ३० ॥
प्रसन्नमुखरागं तं स्मितपूर्वाभिभाषिणम् ।
मूर्तिमन्तममन्यन्त विश्वासमनुजीविनः ॥ ३१ ॥
स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ ३२ ॥

तल्लक्षणं श्रीवत्सरूपम् ॥ श्रीवत्सनन्द्यावर्तादिविच्छन्दा वहवो द्वयोरिति सज्जनः ॥ महदधिकं मङ्गलायतनं मङ्गलगृहं सभारूपम् । कौस्तुभेन मणिनाक्रान्तं श्रीवत्सलक्षणम् । केशवस्येदं कैशवम् । वक्ष इव । शुशुभे ॥

॥ ३० ॥ बभाविति । सोतिथिः कुमारत्वाद्यौवराज्यादनन्तरम् अधिराजस्य भावः आधिराज्यं महाराज्यमवाप्य रेखाभावादर्धेन्दुत्वमप्राप्यैव पूर्णतां गतश्चन्द्रमा इव बभौ इति व्याख्यानम् । तदपि यौवराज्याभावनिश्चये ज्याय एव ॥

॥ ३१ ॥ प्रसन्नेति । प्रसन्नो मुखरागो मुखकान्तिर्यस्य तं स्मितपूर्वं यथा तथाभिभाषिणमाभाषणशीलं तमतिथिमनुजीविनो मूर्तिमन्तं विग्रहवन्तं विश्वासं विश्रम्भममन्यन्त ॥ समौ विश्रम्भविश्वासावित्यमरः ॥

॥ ३२ ॥ स इति । पुरुहूतश्रीः सोतिथिः कल्पद्रुमाणां निभाः समाना ध्वजा यस्यास्तां पुरमयोध्यामैरावतस्य ओज इवौजो वलं यस्य तेन नागेन कुंजरेण क्रममाणश्चरन् ॥ अनुपसर्गाद्वेति वैकल्पिकमात्मनेपदम् ॥ द्यां चकार । स्वर्गलोकसदृशीं चकारेत्यर्थः ॥ द्यौः स्वर्गसुरवर्त्मनोरिति विश्वः ॥

तस्यैकस्योच्छ्रितं छत्त्रं मूर्ध्नि तेनामलत्विषा ।
पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतो हृतम् ॥ ३३ ॥
धूमादग्नेः शिखाः पश्चादुदयादंशवो रवेः ।
सोतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः ॥ ३४ ॥
तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः ।
शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य इव ध्रुवम् ॥ ३५ ॥
अयोध्यादेवताश्चैनं प्रशस्तायतनार्चिताः ।
अनुदध्युरनुध्येयं सांनिध्यैः प्रतिमागतैः ॥ ३६ ॥

॥ ३३ ॥ तस्येति । तस्यैकस्य मूर्ध्नि छत्त्रमुच्छ्रितमुन्नामितम् । अमलत्विषा तेन छत्त्रेण कृत्स्नस्य जगतः पूर्वराजस्य कुशस्य वियोगेन यदौष्म्यं संतापस्तत् हृतं नाशितम् ॥ अत्र छत्त्रोन्नमनसंतापहरणलक्षणयोः कारणकार्ययोर्भिन्नदेशत्वादसंगतिरलंकारः । तदुक्तम् । कार्यकारणयोर्भिन्नदेशत्वे सत्यसंगतिरिति ॥

॥ ३४ ॥ धूमादिति । अग्नेर्धूमात्पश्चादनन्तरं शिखा ज्वालाः । रवेरुदयादनन्तरमंशवः । उत्तिष्ठन्त इति शेषः । सोतिथिस्तेजसामग्न्यादीनां वृत्तिं स्वभावमतीत्य गुणैः समं सहैवोत्थित उदितः ॥ अपूर्वमिदमित्यर्थः ॥

॥ ३५ ॥ तमिति । पौरयोषितः प्रीत्या विशदैः प्रसन्नैर्नेत्रैः करणैस्तमतिथिमन्वयुरनुजग्मुः । [स-]दृष्टिप्रसारमद्राक्षुरित्यर्थः ॥ कथमिव । शरदि प्रसन्नैर्ज्योतिर्भिर्नक्षत्रैर्विभावर्यो रात्रयो ध्रुवमिव ॥ ध्रुवपाशबद्धत्वात्कालचक्रस्येत्यर्थः ॥

॥ ३६ ॥ अयोध्येति । प्रशस्तेष्वायतनेष्वालयेष्वर्चिता अयोध्यादेवताश्चानुध्येयमनुग्राह्यमेनमतिथिं प्रतिमागतैरर्चासंक्रान्तैः सांनिध्यैः संनिधानैरनुदध्युरनुजगृहुः ॥ अनुध्यानमनुग्रह इत्युत्पलमालायाम् ॥ तदनुग्रहबुद्ध्या संनिदधुरित्यर्थः ॥

यावन्नाश्यायते वेदिरभिषेकजलाप्लुता ।
तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥ ३७ ॥
वशिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।
किं तत्साध्यं यदुभये साधयेयुर्न संगताः ॥ ३८ ॥
स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् ।
ददर्श संशयच्छेद्यान्व्यवहारानतन्द्रितः ॥ ३९ ॥
ततः परमभिव्यक्तसौमनस्यनिवेदितैः ।

॥ ३७ ॥ यावदिति । अभिषेकजलैराप्लुता सिक्ता वेदिरभिषेकवेदिर्या-वन्नाश्यायते न शुष्यति ॥ कर्तरि लट् ॥ तावदेवास्य राज्ञो दुःसहः प्रता-पो वेलान्तं वेलापर्यन्तं प्राप ॥

॥ ३८ ॥ वशिष्ठस्येति । गुरोर्वशिष्ठस्य मन्त्राः । धन्विनस्तस्यातिथेः सायकाः । इत्युभये संगताः सन्तो यत्साध्यं न साधयेयुस्तत्तादृक्साध्यं किम् । न किंचिदित्यर्थः ॥ तेषामसाध्यं नास्तीति भावः ॥

॥ ३९ ॥ स इति । धर्मे तिष्ठन्तीति धर्मस्थाः सभ्याः । राज्ञा सभा-सदः कार्या रिपौ मित्रे च ये समा इत्युक्तलक्षणाः । तेषां सखा धर्मस्थ-सखः। तत्सहित इत्यर्थः । अतन्द्रितोनलसः स नृपः शश्वत् । अन्वहमित्य-र्थः । अर्थिनां साध्यार्थवतां प्रत्यर्थिनां तद्विरोधिनां च संशयच्छेद्यान्सं-शयाद्धेतोश्छेद्यान्परिच्छेद्यान् । संदिग्धत्वादवश्यनिर्णेयानित्यर्थः । व्यव-हारानृणादीन्विवादान्स्वयं ददर्श अनुसंदधौ । न तु प्राड्विवाकमेव नियु-क्तवानित्यर्थः ॥ अत्र याज्ञवल्क्यः । व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतो-न्वहमिति ॥

॥ ४० ॥ तत इति । ततः परं व्यवहारदर्शनानन्तरं भृत्याननुजी-विनः । अभिव्यक्तं मुखप्रसादादिलिङ्गैः स्फुटीभूतं यत्सौमनस्यं स्वामिनः प्रसन्नत्वं तेन निवेदितैः सूचितैः पाकाभिमुखैः सिद्ध्युन्मुखैर्विज्ञापनानां

युयोज पाकाभिमुखैर्भृत्यान्विज्ञापनाफलैः ॥ ४० ॥
प्रजास्तद्गुरुणा नद्यो नभसेव विवर्धिताः ।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः ॥ ४१ ॥
यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।
सोभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥ ४२ ॥
वयोरूपविभूतीनामेकैकं मदकारणम् ।

विज्ञप्तीनां फलैः प्रेप्सितार्थैर्युयोज योजयामास ॥ अत्र बृहस्पतिः । नियुक्तकर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया । भृत्यान्धनैर्मानयंस्तु नवोप्यक्षोभ्यतां व्रजेदिति ॥ कविश्च वक्ष्यति अक्षोभ्य इति ॥ अत्र सौमनस्यफलयोजनादिभिर्नृपस्य वृक्षसमाधिर्व्यन्यत इत्यनुसंधेयम् ॥

॥ ४१ ॥ प्रजा इति । प्रजास्तस्यातिथेर्गुरुणा पित्रा कुशेन । नभसा श्रावणमासेन नद्य इव । विवर्धिताः । तस्मिन्नतिथौ तु नभस्ये भाद्रपदे मासे ता इव नद्य इव भूयसीं वृद्धिमत्युच्छ्रयमाययुः । प्रजापोषणेन पितरमतिशायितवानित्यर्थः ॥

॥ ४२ ॥ यदिति । सोतिथिर्यद्वाक्यं दानत्राणादिविषयमुवाच तन्न मिथ्या । अनृतं नाभूत् । यद्वस्तु ददौ तन्नजहार न पुनराददे ॥ किं तु शत्रूनुद्धृत्योत्खाय प्रतिरोपयन्पुनः स्थापयन्भग्नव्रतो भग्ननियमोभूत् ॥

॥ ४३ ॥ वय इति । वयोरूपविभूतीनां यौवनसौन्दर्यैश्वर्याणां मध्य एकैकं मदकारणं मदहेतुः । तानि मदकारणानि तस्मिन्राज्ञि समस्तानि मिलितानि । तथापि तस्यातिथेर्मनो नोत्सिषिचे न जगर्व ॥ सिञ्चतेः स्वरितेत्त्वादात्मनेपदम् ॥ अत्र वयोरूपादीनां गर्वहेतुत्वान्मदस्य च मदिराकार्यत्वेन अतत्कारकत्वान्मदशब्देन गर्वो लक्ष्यत इत्याहुः । उक्तं च । ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिनान्येषामवज्ञा गर्व

तानि तस्मिन्समस्तानि न तस्योत्सिषिचे मनः ॥ ४३ ॥
इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीद्दृढमूल इव द्रुमः ॥ ४४ ॥
अनित्याः शत्रवो बाह्या विप्रकृष्टाश्च ते यतः ।
अतः सोऽभ्यन्तरान्नित्यान्षट् पूर्वमजयद्रिपून् ॥ ४५ ॥
प्रसादाभिमुखे तस्मिंश्चपलापि स्वभावतः ।
निकषे हेमरेखेव श्रीरासीदनपायिनी ॥ ४६ ॥
कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ४७ ॥

ईरितः ॥ मदस्त्वानन्दसंमोहसंभेदो मदिराकृत इति ॥ अत एव कविनापि नोत्सिषिच इत्युक्तं न तु न ममादेति ॥

॥ ४४ ॥ इत्थमिति । इत्थमनुवासरमन्वहं प्रकृतिषु प्रजासु जनित-रागासु सतीषु स राजा नवोपि दृढमूलो द्रुम इवाक्षोभ्यः अप्रधृष्य आसीत् ॥

॥ ४५ ॥ अनित्या इति । यतो बाह्याः शत्रवः प्रतिनृपा अनित्याः । द्विषन्ति स्निह्यन्ति चेत्यर्थः । किं च ते बाह्या विप्रकृष्टा दूरस्थाश्च । अतः सोऽभ्यन्तरानन्तर्वर्तिनो नित्यान्षड्रिपून्कामक्रोधादीन्पूर्वमजयत् ॥ अन्तः-शत्रुजये बाह्या अपि न दुर्जया इति भावः ॥

॥ ४६ ॥ प्रसादेति । स्वभावतश्चपला चञ्चलापि श्रीः प्रसादाभि-मुखे तस्मिन्नृपे । निकषे निकषोपले हेमरेखेव । अनपायिनी स्थिरासीत् ॥

॥ ४७ ॥ कातर्यमिति । केवला शौर्यवर्जिता नीतिः कातर्यं भीरुत्वम् । शौर्यं केवलमित्यनुषञ्जनीयम् । नीतिरहितं शौर्यं श्वापदचेष्टितम् । व्याघ्रादिचेष्टाप्रायमित्यर्थः ॥ व्याघ्रादयो वनचराः पशवः श्वापदा मता इति हलायुधः ॥ अतो हेतोः सोतिथिः समेताभ्यां संगताभ्यामुभाभ्यां नीतिशौर्याभ्यां सिद्धिं जयप्राप्तिमन्वियेष गवेषितवान् ॥

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत्किंचिद्व्यभ्रस्येव विवस्वतः ॥ ४८ ॥
रात्रिंदिवविभागेषु यदादिष्टं महीक्षिताम् ।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४९ ॥
मन्त्रः प्रतिदिनं तस्य बभूव सह मन्त्रिभिः ।
स जातु सेव्यमानोपि गुप्तद्वारो न सूच्यते ॥ ५० ॥

॥ ४८ ॥ न तस्येति । न्यस्ताः सर्वतः प्रहिताः प्रणिधयश्चारा एव दीधितयो रश्मयो यस्य तस्य ॥ प्रणिधिः प्रार्थने चर इति शाश्वतः ॥ तस्य राज्ञो व्यभ्रस्य निर्मेघस्य विवस्वतः सूर्यस्येव मण्डले स्वविषये किंचिदल्पमप्यदृष्टमज्ञातं नाभवन्नास्ति स्म ॥ चारचक्षुषा सर्वं पश्यतीत्यर्थः ॥

॥ ४९ ॥ रात्रिंदिवेति । रात्रौ च दिवा च रात्रिंदिवम् ॥ अचतुरेत्यादिनाधिकरणार्थयोर्द्वन्द्वसमासान्तो निपातः । अव्ययान्तत्वादव्ययम् । अत्र षष्ठ्यर्थलक्षणया रात्रिंदिवमिति अहोरात्रयोरित्यर्थः ॥ तयोर्विभागा अंशाः प्रहरादयः । तेषु महीक्षितां राज्ञां यदादिष्टमिदमस्मिन्काले कर्तव्यमिति मन्वादिभिरुपदिष्टं तत्स राजा विकल्पपराङ्मुखः संशयरहितः सन् नियोगेन निश्चयेन सिषेवे । अनुष्ठितवानित्यर्थः ॥ अत्र कौटिल्यः । कार्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेति नियोगः । अनेन वान्येन वेति विकल्पः । अनेन चेति समुच्चय इति ॥

॥ ५० ॥ मन्त्र इति । तस्य राज्ञः प्रतिदिनं मन्त्रिभिः सह मन्त्रो विचारो बभूव । स मन्त्रः सेव्यमानोन्वहमावर्त्यमानोपि जातु कदाचिदपि न सूच्यते न प्रकाश्यते ॥ तत्र हेतुर्गुप्तद्वार इति । संवृतेङ्गिताकारादिज्ञानमार्ग इत्यर्थः ॥

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः ।
सोपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१ ॥
दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ ५२ ॥
भव्यमुख्याः समारम्भाः प्रत्यवेक्ष्या निरत्ययाः ।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे ॥ ५३ ॥

॥ ५१ ॥ परेष्विति । यथाकालमुक्तकालानतिक्रमेण स्वपन्नपि सोतिथिः परेषु शत्रुषु स्वेषु स्वकीयेषु च । मन्त्र्यादितीर्थेष्विति शेषः । क्षिप्तैः प्रहितैरविज्ञाताः परस्परे येषां तैः । अन्योन्याविज्ञातैरित्यर्थः । अपसर्पैश्चरैः ॥ अपसर्पश्चरः स्पश इत्यमरः ॥ जजागार बुद्धवान् । चारमुखेन सर्वदा सर्वमज्ञासीदित्यर्थः ॥ अत्र कामन्दकः । चारांश्च चारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्ड्यादीनविज्ञातानन्योन्यमितरैरपीति ॥

॥ ५२ ॥ दुर्गाणीति । द्विषां रोद्धू रोधकस्यापि । न तु स्वयं रोध्यस्येत्यर्थः । तस्य राज्ञो दुर्ग्रहाणि परैर्दुर्धर्षाणि दुर्गाणि महीदुर्गादीन्यासन् । न च निर्भीकस्य किं दुर्गैरिति वाच्यमित्यर्थान्तरन्यासमुखेनाह न हीति । गजानास्कन्दति हिनस्तीति गजास्कन्दी सिंहो भयाद्धेतोः । गिरिगुहासु शेत इति । गिरिगुहाशयो न हि । किं तु स्वभावत एवेति शेषः ॥ अधिकरणे शेतेरित्यच्प्रत्ययः ॥ अत्र मनुः । धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेद्बुध इति ॥

॥ ५३ ॥ भव्येति । भव्यमुख्याः कल्याणप्रधानाः । न तु विपरीताः । प्रत्यवेक्ष्याः एतावत्कृतमेतावत्कर्तव्यमित्यनुसंधानेन विचारणीयाः । अत एव निरत्यया निर्बाधाः गर्भेभ्यन्तरे पच्यन्ते ये शालयस्तेषां सधर्माणः । अतिनिगूढा इत्यर्थः ॥ धर्मादनिच्केवलादित्यनिच्प्रत्ययः समासान्तः ॥ तस्य राज्ञः समारभ्यन्त इति समारम्भाः कर्माणि गूढमप्रकाशं विपेचिरे । फलिता इत्यर्थः । फलानुमेयाः प्रारम्भा इत्यर्थः ॥

अपथेन प्रववृते न जातूपचितोपि सः ।
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ॥ ५४ ॥
कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः ।
यस्य कार्यः प्रतीकारः स तन्नैवोदपादयत् ॥ ५५ ॥
शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतः सतः ।
समीरणसहायोपि नाम्भःप्रार्थी दवानलः ॥ ५६ ॥

॥ ५४ ॥ अपथेनेति । सोतिथिरुपचितोऽपि वृद्धिं गतोपि सन् जातु कदाचिदप्यपथेनामार्गेण न प्रववृते न प्रवृत्तः । मर्यादां न जहावित्यर्थः ॥ तथा हि । लवणाम्भसो लवणसागरस्य वृद्धौ पूरोत्पीडे सत्यां नदीमुखेनैव नदीप्रवेशमार्गेणैव प्रस्थानं निःसरणम् । नान्यथेत्यर्थः ॥

॥ ५५ ॥ काममिति । प्रकृतिवैराग्यं प्रजापरागम् । दैवादुत्पन्नमपीति शेषः । सद्यः कामं सम्यक्शमयितुं प्रतिकर्तुं क्षमः शक्तः स राजा यस्य प्रकृतिवैराग्यस्य प्रतीकारः कार्यः कर्तव्यः । अनर्थहेतुत्वादित्यर्थः । तद्वैराग्यं नोदपादयत् । उत्पन्नप्रतीकारादनुत्पादनं वरमिति भावः ॥ अत्र कौटिल्यः । क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् । तस्मात्प्रकृतीनां विरागकारणानि नोत्पादयेदिति ॥

॥ ५६ ॥ शक्येष्विति । शक्तिमतः शक्तिसंपन्नस्यापि सतस्तस्य राज्ञः शक्येषु शक्तिविषयेषु स्वस्माद्धीनबलेष्वेव विषये यात्रा दण्डयात्राभवत् । न तु समाधिकेष्वित्यर्थः ॥ तथा हि । समीरणसहायोपि दवानलोम्भःप्रार्थी जलान्वेषी न । दग्धुमिति शेषः । किं तु तृणकाष्ठादिकमेवान्विष्यतीत्यर्थः ॥ अत्र कौटिल्यः । समज्यायोभ्यां संदधीत हीनेन विगृह्णीयादिति ॥

न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ ।
नार्थं कामेन कामं वा सोर्थेन सदृशस्त्रिषु ॥ ५७ ॥
हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते ।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥ ५८ ॥
परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्बलिष्ठश्चेत्परस्मादास्त सोन्यथा ॥ ५९ ॥

॥ ५७ ॥ न धर्ममिति । स राजा अर्थकामाभ्यां धर्मं न बबाधे न नाशितवान् । तेन धर्मेण च तावर्थकामौ न । अर्थं कामेन कामं वार्थेन न बबाधे ॥ एकत्रैवासक्तो नाभूदित्यर्थः । किं तु त्रिषु धर्मार्थकामेषु सदृशस्तुल्यवृत्तिः । अभूदिति शेषः ॥

॥ ५८ ॥ हीनानीति । मित्राणि हीनान्यतिक्षीणानि चेदनुपकर्तॄणि अनुपकारीणि । प्रवृद्धान्यतिसमृद्धानि चेद्विकुर्वते विरुद्धं चेष्टन्ते । अपकुर्वत इत्यर्थः ॥ अकर्मकाच्चेत्यात्मनेपदम् ॥ अतःकारणात्तेन राज्ञा मित्राणि सुहृदः ॥ मित्रं सुहृदि मित्रोर्के इति विश्वः ॥ मध्यमशक्तीनि नातिक्षीणोच्छ्रितानि यथा तथा स्थापितानि ॥

॥ ५९ ॥ शक्येष्वेवाभवद्यात्रेत्यादिनोक्तमर्थं सोपस्करमाह ॥ परेति । सोतिथिः परात्मनोः शत्रोरात्मनश्च शक्त्यादीनां शक्तिदेशकालादीनां बलाबलं न्यूनाधिकभावं परिच्छिद्य निश्चित्य एभिः शक्त्यादिभिः परस्माच्छत्रोर्बलिष्ठः स्वयमतिशयेन बलवांश्चेत् ॥ बलशब्दान्मतुबन्तादिष्ठन्प्रत्ययः । विन्मतोर्लुगिति मतुपो लुक् ॥ ययौ यात्रां चक्रे । अन्यथा न बलिष्ठश्चेदास्त अतिष्ठत् । न ययावित्यर्थः ॥ अत्र मनुः । यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् । परस्य विपरीतं चेत्तदा यायाद्रिपून्प्रति । यदा तु स्यात्परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीनिति ॥

कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ ६० ॥
परकर्मापहः सोभूदुद्यतः स्वेषु कर्मसु ।
आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्रहरन्रिपून् ॥ ६१ ॥
पित्रा संवर्धितो नित्यं कृतास्त्रः सांपरायिकः ।
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥ ६२ ॥
सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः ।

॥ ६० ॥ कोशेनेति । कोशेनार्थचयेनाश्रयणीयत्वं भजनीयत्वम् । भवतीति शेषः । इति हेतोस्तस्य राज्ञः कर्तुः अर्थसंग्रहः । न तु लोभादित्यर्थः॥ तथा हि । अम्बु गर्भे यस्य सोम्बुगर्भः । जीवनस्य जलस्य मूतः पुटबन्धो जीमुतो मेघः ॥ मूङ्बन्धने । पृषोदरादित्वात्साधुः ॥ चातकैरभिनन्द्यते सेव्यते ॥ न तु कर्तरि क्तः ॥ अत्र कामन्दकः। धर्महेतोस्तथार्थाय भृत्यानां रक्षणाय च । आपदर्थं च संरक्ष्यः कोशो धर्मवता सदेति ॥

॥ ६१ ॥ परकर्मेति । स राजा परेषां कर्माणि सेतुवार्त्तादीन्यपहन्तीति परकर्मापहः सन् ॥ अन्येष्वापि दृश्यत इत्यपिशब्दसामर्थ्याद्धन्तेर्डप्रत्ययः ॥ स्वेषु कर्मसूद्यत उद्युक्तोभूत् । किं च रिपून्रन्ध्रेषु प्रहरन्नात्मनो रन्ध्रं व्यसनादिकमावृणोत्संवृतवान् ॥ अत्र मनुः । नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु । गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मन इति ॥

॥ ६२ ॥ पित्रेति । दण्डो दमः सैन्यं वा । तद्वतो दण्डवतो दण्डसंपन्नस्य तस्य राज्ञः पित्रा कुशेन नित्यं संवर्धितः पुष्टः कृतास्त्रः शिक्षितास्त्रः । संपरायो युद्धम् ॥ युद्धायत्योः संपराय इत्यमरः ॥ तमर्हतीति सांपरायिकः ॥ तदर्हतीति ठक्प्रत्ययः ॥ दण्डः सैन्यम् ॥ दण्डो यमे मानभेदे लगुडे दमसैन्ययोरिति विश्वः ॥ स्वदेहान्न व्यशिष्यत नाभिद्यत ॥ स्वदेहेपि विशेषणानि योज्यानि । मूलबलं स्वदेहनिर्विशेषं रक्षति स्वदेहनिर्विशेषमित्यर्थः ॥

॥ ६३ ॥ सर्पस्येति । सर्पस्य शिरोरत्नमिव अस्य राज्ञः शक्तित्रयं

स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ ६३ ॥
वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४ ॥
तपो रक्षन्स विघ्नेभ्यस्तस्करेभ्यश्च संपदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरपि षडंशभाक् ॥ ६५ ॥
खनिभिः सुषुवे रत्नं क्षेत्रैः शस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६ ॥
स गुणानां बलानां च षण्णां षण्मुखविक्रमः ।

परः शत्रुर्न चकर्ष । स तु परस्माच्छत्रोस्तच्छक्तित्रयम् । अयस्कान्तो मणिविशेष आयसं लोहविकारमिव । चकर्ष ॥

॥ ६४ ॥ वापीष्विति । स्रवन्तीषु नदीषु वापीष्विव दीर्घिकास्विव । वनेष्वरण्येषु उपवनेष्वारामेष्विव ॥ वापी तु दीर्घिका । आरामः स्यादुपवनमिति चामरः ॥ अद्रिषु स्वकीयेषु वेश्मस्विव सार्था वणिक्प्रभृतयः स्वैरं स्वेच्छया चेरुश्चरन्ति स्म ॥

॥ ६५ ॥ तप इति । विघ्नेभ्यस्तपो रक्षन् । तस्करेभ्यः संपदश्च रक्षन् । स राजा आश्रमैर्ब्रह्मचर्यादिभिर्वर्णैरपि ब्राह्मणादिभिश्च यथास्वं स्वमनतिक्रम्य षडंशभाक्चक्रे ॥ यथाक्रममाश्रमैस्तपसो वर्णैः संपदां च षष्ठांशभाक्कृत इत्यर्थः ॥ षष्ठांशः षडंशः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमुक्तं प्राक् ॥

॥ ६६ ॥ खनिभिरिति । भूर्भूमिस्तस्मै राज्ञे रक्षासदृशं रक्षणानुरूपमेव वेतनं भृतिं दिदेश ददौ ॥ कथम् । खनिभिराकरैः ॥ खनिः स्त्रियामाकरः स्यादित्यमरः ॥ रत्नं माणिक्यादिकं सुषुवेजीजनत् । क्षेत्रैः शस्यम् । वनैर्गजान्हस्तिनः सुषुवे ॥

॥ ६७ ॥ स इति । षण्मुखविक्रमः स राजा षण्णां गुणानां संधिविग्रहादीनां बलानां मूलभृत्यादीनां च साधनीयेषु वस्तुषु साध्येष्वर्थेषु

बभूव विनियोगज्ञः साधनीयेषु वस्तुषु ॥ ६७ ॥
इति क्रमात्प्रयुञ्जानो राजनीतिं चतुर्विधाम् ।
आ तीर्थादप्रतीघातं स तस्याः फलमानशे ॥ ६८ ॥
कूटयुद्धविधिज्ञेपि तस्मिन्सन्मार्गयोधिनि ।
भेजेभिसारिकावृत्तिं जयश्रीर्वीरगामिनी ॥ ६९ ॥
प्रायः प्रतापभग्नत्वादरीणां तस्य दुर्लभः ।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः ॥ ७० ॥

विनियोगं जानातीति विनियोगस्य ज्ञ इति वा विनियोगज्ञः ॥ कर्मविवक्षायामुपपदसमासः । आतोनुपसर्गे क इति कप्रत्ययः । शेषविवक्षायां षष्ठीसमासः । इगुपधेत्यादिना कप्रत्ययः ॥ बभूव ॥ इदमत्र प्रयोक्तव्यमित्याद्यज्ञासीदित्यर्थः ॥

॥ ६८ ॥ इतीति । इति चतुर्विधाम् । सामाद्युपायैरिति शेषः । राजनीतिं दण्डनीतिं क्रमात्सामादिक्रमादेव प्रयुञ्जानः स राजा आ तीर्थान्मन्त्राद्यष्टादशात्मकतीर्थपर्यन्तम् ॥ योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्यादिति हलायुधः ॥ तस्या नीतेः फलमप्रतीघातमप्रतिबन्धं यथा तथानशे प्राप्तवान् । मन्त्रादिषु यमुद्दिश्य य उपायः प्रयुज्यते स तस्य फलतीत्यर्थः ॥

॥ ६९ ॥ कूटेति । कूटयुद्धविधिज्ञेपि कपटयुद्धप्रकाराभिज्ञेपि सन्मार्गेण योधिनि धर्मयोद्धरि तस्मिन्वीरगामिनी जयश्रीरभिसारिकावृत्तिं भेजे ॥ कान्तार्थिनी तु या याति संकेतं साभिसारिकेत्यमरः ॥ जयश्रीस्तमान्विष्यागच्छादित्यर्थः ॥

॥ ७० ॥ प्राय इति । अरीणां सर्वेषामपि प्रतापेन तेजसैव भग्नत्वात्तस्य राज्ञः । गन्धेन मदगन्धेनैव भिन्ना भग्ना अन्ये दन्तिनो येन तस्य गन्धद्विपस्येव । प्रायः प्रायेण रणो दुर्लभः ॥ खलर्थयो गेपि शेषविवक्षायां षष्ठीमिच्छन्तीत्युक्तम् ॥

प्रवृद्धौ हीयते चन्द्रः समुद्रोपि तथाविधः ।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी ॥ ७१ ॥
सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः ।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥ ७२ ॥
स्तूयमानः स जिह्राय स्तुत्यमेव समाचरन् ।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥ ७३ ॥
दुरितं दर्शनेन घ्नंस्तत्त्वार्थेन नुदंस्तमः ।
प्रजाः स्वतन्त्रयांचक्रे शश्वत्सूर्य इवोदितः ॥ ७४ ॥

॥ ७१ ॥ प्रवृद्धाविति । प्रवृद्धौ सत्यां चन्द्रो हीयते । समुद्रोपि तथाविधश्चन्द्रवदेव प्रवृद्धौ हीयते । प्रवृद्ध इति वा पाठः । स राजा तु ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य स तत्समवृद्धिश्चाभूत् । तौ चन्द्रसमुद्राविव क्षयी ॥ जिदृक्षीत्यादिना इनिप्रत्ययः ॥ नाभूत् ॥

॥ ७२ ॥ सन्त इति । अत्यर्थं कृशा दरिद्रा अत एवार्थिनो याचनशीलाः सन्तो विद्वांसो महतस्तस्य राज्ञोभिगमनात् । उदधेरभिगमनाज्जीमूता इव । दातृत्वं प्रापुः ॥ अर्थिभ्यो दानभोगपर्याप्तं धनं प्रयच्छतीत्यर्थः ॥

॥ ७३ ॥ स्तूयमान इति । स राजा स्तुत्यं स्तोत्रार्हमेव यत्तदेव समाचरन्नत एव स्तूयमानः सन् जिह्राय ललज्ज । तथापि ह्रीणत्वेपि तत्कारिणः स्तोत्रकारिणो द्वेष्टीति तत्कारिद्वेषिणस्तस्य राज्ञो यशो ववृधे ॥ गुणाढ्यस्य सतः पुंसः स्तुतौ लज्जैव भूषणमिति भावः ॥

॥ ७४ ॥ दुरितमिति । स राजा उदितः सूर्य इव दर्शनेन दुरितं घ्नन्निवर्तयन् ॥ तथा स्मर्यते । अग्निचित्कपिला सत्त्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यश इति ॥ तत्त्वस्य वस्तुतत्त्वस्यार्थेन समर्थनेन प्रकाशनेन च तमोज्ञानं ध्वान्तं च नुदन् शश्वत्प्रजाः स्वतन्त्रयांचक्रे स्वाधीनाश्चकार ॥

इन्दोरगतयः पद्मे सूर्यस्य कुमुदेंशवः ।
गुणास्तस्य विपक्षेपि गुणिनो लेभिरेन्तरम् ॥ ७५ ॥
पराभिसंधानपरं यद्यप्यस्य विचेष्टितम् ।
जिगीषोरश्वमेधाय धर्म्यमेव बभूव तत् ॥ ७६ ॥
एवमुद्यन्प्रभावेण शास्त्रनिर्दिष्टवर्त्मना ।
वृषेव देवो देवानां राज्ञां राजा बभूव सः ॥ ७७ ॥
पञ्चमं लोकपालानामूचुः साधर्म्ययोगतः ।
भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥ ७८ ॥
दूरापवर्जितच्छत्त्रैस्तस्याज्ञां शासनार्पिताम् ।

॥ ७५ ॥ इन्दोरिति । इन्दोरंशवः पद्मेगतयः । प्रवेशरहिता इत्यर्थः । सूर्यस्यांशवः कुमुदेगतयः । गुणिनस्तस्य गुणास्तु विपक्षे शत्रावप्यन्तरमवकाशं लेभिरे प्रापुः ॥

॥ ७६ ॥ परेति । अश्वमेधाय जिगीषोरस्य पराभिसंधानपरं शत्रुवञ्चनप्रधानं यद्यपि विचेष्टितं दिग्विजयरूपं तद्धर्म्यं धर्मादनपेतमेव ॥ धर्मपथ्यर्थन्यायादनपेत इत्यादिना यत्प्रत्ययः ॥ बभूव ॥ मन्त्रप्रभावोत्साहशक्तिभिरभिसंदध्यादिति कौटिल्यः ॥

॥ ७७ ॥ एवमिति । एवं शास्त्रनिर्दिष्टवर्त्मना शास्त्रोपदिष्टमार्गेण प्रभावेण कोशदण्डजेन तेजसा ॥ स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजमित्यमरः ॥ उद्यन्नुद्गुञ्जानः स वृषा वासवो देवानां देवो देवदेव इव राज्ञां राजा राजराजो बभूव ॥

॥ ७८ ॥ पञ्चममिति । तं राजानं साधर्म्ययोगतो यथाक्रमं लोकसंरक्षणपरोपकारभूधारणरूपसमानधर्मत्वाल्लोकपालानामिन्द्रादीनां चतुर्णां पञ्चममूचुः । महतां भूतानां पृथिव्यादीनां पञ्चानां षष्ठमूचुः । कुलभूभृतां कुलाचलानां महेन्द्रमलयादीनां सप्तानामष्टममूचुः ॥

॥ ७९ ॥ दूरेति । भूपालाः शासनेषु पत्त्रेष्वर्पितामुपन्यस्तां तस्य

दधुः शिरोभिर्भूपाला देवाः पौरंदरीमिव ॥ ७९ ॥
ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ ॥
यथा साधारणीभूतं नामास्य धनदस्य च ॥ ८० ॥
इन्द्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोभूद्
यादोनाथः शिवजलपथः कर्मणे नौचराणाम् ।
पूर्वापेक्षी तदनु विदधे कोषवृद्धिं कुबेरस्
तस्मिन्दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतावतिथिवर्णनो नाम सप्तदशः सर्गः ॥

राज्ञ आज्ञां देवाः पौरंदरीमैन्द्रीमाज्ञामिव दूरापवर्जितच्छत्रैर्दूरात्परिहृतातपत्रैः शिरोभिर्दधुः ॥

॥ ८० ॥ ऋत्विज इति । स राजा महाक्रतावश्वमेधेर्त्विजो याजकान्दक्षिणाभिस्तथानर्चार्चयामास ॥ अर्चतेर्भौवादिकाल्लिट् ॥ यथास्य राज्ञो धनदस्य च नाम साधारणीभूतमेकीभूतम् ॥ उभयोरपि धनदसंज्ञा यथा स्यात्तथेत्यर्थः ॥

॥ ८१ ॥ इन्द्रादिति । इन्द्राद्वृष्टिरभूत् । यमो नियमिता निवारिता गदस्य रोगस्योद्रेक एव वृत्तिर्येन सोभूत् । यादोनाथो वरुणो नौचराणां नाविकानां कर्मणे संचाराय शिवजलपथः सुचरजलमार्गोभूत् । तदनु पूर्वापेक्षी रघुरामादिमहिमाभिज्ञः कुबेरः कोषवृद्धिं विदधे । इत्थं लोकपालास्तस्मिन्राज्ञि विषये दण्डोपनतस्य शरणागतस्य चरितं वृत्तिं भेजिरे ॥ दुर्बलो बलवत्सेवी विरुद्धाच्छङ्कितादिभिः । वर्तेत दण्डोपनतो भर्तर्येवमवास्थित इति कौटिल्यः ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीविनीसमाख्यायां सप्तदशः सर्गः ॥

स नैषधस्यार्थपतेः सुतायाम्
उत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात्
पुत्रं यमाहुर्निषधाख्यमेव ॥ १ ॥
शब्दादि निर्विश्य सुखं चिराय
तस्मिन्प्रतिष्ठापितराजशब्दः ।
कौमुद्वतेयः कुमुदावदातैर्
द्यामर्जितां कर्मभिरारुरोह ॥ २ ॥
पौत्रः कुशस्यापि कुशेशयाक्षः
ससागरां सागरधीरचेताः ।

यत्पादपांसुसंपर्कादहल्यासीदपांसुला ।
कारुण्यसिन्धवे तस्मै नमो वैदेहिवन्धवे ॥

॥ १ ॥ स इति । निषिद्धशत्रुर्निवारितरिपुः सोतिथिर्नैषधस्य निषधदेशाधीश्वरस्यार्थपते राज्ञः सुतायां निषधान्निषधाख्यान्नगेन्द्रात्पर्वतादनूनसारमन्यूनबलं पुत्रमुत्पादयामास । यं पुत्रं निषधाख्यं निषधनामकमेवाहुः।

॥ २ ॥ शब्दादीति । कुमुद्वत्या अपत्यं पुमान्कौमुद्वतेयोतिथिः शब्दादि शब्दस्पर्शादि सुखं सुखसाधनं विषयवर्गं निर्विश्योपभुज्य चिराय तस्मिन्निषधाख्ये पुत्रे प्रतिष्ठापितराजशब्दः सन्कुमुदावदातैर्निर्मलैः कर्मभिरश्वमेधादिभिरर्जितां संपादितां द्यां स्वर्गमारुरोह ॥

॥ ३ ॥ पौत्र इति । कुशेशयाक्षः शतपत्त्रलोचनः ॥ शतपत्त्रं कुशेशयमित्यमरः ॥ सागरधीरचेताः समुद्रगम्भीरचित्त एकवीरोसहायशूरः।

एकातपत्रां भुवमेकवीरः
पुरार्गलादीर्घभुजो बुभोज ॥ ३ ॥
तस्यानलौजास्तनयस्तदन्ते
वंशश्रियं प्राप नलाभिधानः ।
यो नड्वलानीव गजः परेषां
बलान्यमृद्गान्नलिनाभवक्त्रः ॥ ४ ॥
नभश्चरैर्गीतयशाः स लेभे
नभस्तलश्यामतनुं तनूजम् ।
ख्यातं नभःशब्दमयेन नाम्ना
कान्तं नभोमासमिव प्रजानाम् ॥ ५ ॥
तस्मै विसृज्योत्तरकोशलानां
धर्मोत्तरस्तत्प्रभवे प्रभुत्वम् ।

पुरस्यार्गला कपाटविष्कम्भः ॥ तद्विष्कम्भेर्गलं न नेत्यमरः ॥ तद्वद्दीर्घभुजः कुशस्य पौत्रो निषधोपि ससागरामेकातपत्रां भुवं बुभोज पालयामास ॥ भुजोनवन इति नियमात्परस्मैपदम् ॥

॥ ४ ॥ तस्येति । अनलौजा नलाभिधानो नलाख्यस्तस्य निषधस्य तनयस्तस्य निषधस्यान्तेवसाने वंशश्रियं राज्यलक्ष्मीं प्राप । नलिननाभवक्त्रो यो नलः गजो नड्वलानि नडप्रायस्थलानीव ॥ नडशादाड्ड्वलजिति ड्वलच्प्रत्ययः ॥ परेषां बलान्यमृद्गान्ममर्द ॥

॥ ५ ॥ नभ इति । नभश्चरैर्गन्धर्वादिभिर्गीतयशाः स नलो नभस्तलश्यामतनुं नभःशब्दमयेन नाम्ना ख्यातम् । नभःशब्दसंज्ञकमित्यर्थः । नभोमासमिव श्रावणमासमिव प्रजानां कान्तं प्रियं तनूजं पुत्रं लेभे ॥

॥ ६ ॥ तस्मा इति । धर्मोत्तरो धर्मप्रधानः स नलः प्रभवे समर्थाय तस्मै नभसे तत् उत्तरकोशलानां प्रभुत्वमाधिपत्यं विसृज्य दत्त्वा जरसा

मृगैरजर्यं जरसोपदिष्टम्
अदेहबन्धाय पुनर्बबन्ध ॥ ६ ॥
तेन द्विपानामिव पुण्डरीको
राज्ञामजय्योजनि पुण्डरीकः ।
शान्ते पितर्याहृतपुण्डरीका
यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥ ७ ॥
स क्षेमधन्वानममोघधन्वा
पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं
वने तपः क्षान्ततरश्चचार ॥ ८ ॥

जरयोपदिष्टम् । वार्द्धके चिकीर्षितमित्यर्थः । मृगैरजर्यं तैः सह संगतम् ॥ अजर्यं संगतमिति निपातः ॥ पुनरदेहबन्धाय पुनर्देहसंबन्धनिवृत्तये बबन्ध । मोक्षार्थं वनं गत इत्यर्थः ॥ अदेहबन्धायेत्यत्र प्रसज्यप्रतिषेधेपि नञ्समास इष्यते ॥

॥ ७ ॥ तेनेति । तेन नभसा । द्विपानां पुण्डरीको दिग्गजविशेष इव । राज्ञामजय्यो जेतुमशक्यः ॥ क्षय्यजय्यौ शक्यार्थ इति निपातनात्साधुः ॥ पुण्डरीकः पुण्डरीकाख्यः पुत्रोजनि जनितः । पितरि शान्ते स्वर्गं गते सति आहृतपुण्डरीका गृहीतश्वेतपद्मा श्रीर्यं पुण्डरीकं पुण्डरीकाक्षं विष्णुमिव श्रिता ॥

॥ ८ ॥ स इति । अमोघं धनुर्यस्य सोमोघधन्वा ॥ धनुषश्चेत्यनङादेशः समासान्तः ॥ स पुण्डरीकः प्रजानां क्षेमविधाने दक्षं क्षमयोपपन्नं क्षान्तियुक्तं क्षेमं धनुर्यस्य तं क्षेमधन्वानं नाम पुत्रम् ॥ वा संज्ञायामित्यनङादेशः ॥ क्ष्मां लम्भयित्वा प्रापय्य ॥ लभेर्गत्यर्थत्वाद्विकर्मकत्वम् ॥ क्षान्ततरोत्यन्तसहिष्णुः सन्वने तपश्चचार ॥

अनीकिनीनां समरेऽग्रयायी
तस्यापि देवप्रतिमः सुतोऽभूत् ।
व्यश्रूयतानीकपदावसानं
देवादि नाम त्रिदिवेऽपि यस्य ॥ ९ ॥

पिता समाराधनतत्परेण
पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मजवत्सलेन
स तेन पित्रा पितृमान्बभूव ॥ १० ॥

पूर्वस्तयोरात्मसमे चिरोढाम्
आत्मोद्भवे वर्णचतुष्टयस्य ।
धुरं निधायैकनिधिर्गुणानां
जगाम यज्वा यजमानलोकम् ॥ ११ ॥

॥ ९ ॥ अनीकिनीनामिति । तस्य क्षेमधन्वनोपि समरेनीकिनीनां चमूनामग्रयायी देवप्रतिम इन्द्रादिकल्पः सुतोभूत् । अनीकपदावसान-मनीकशब्दान्तं देवादि देवशब्दपूर्वं यस्य नाम देवानीक इति नामधेयं त्रिदिवे स्वर्गेपि व्यश्रूयत विश्रुतम् ॥

॥ १० ॥ पितेति । स पिता क्षेमधन्वा समाराधनतत्परेण शुश्रूषाप-रेण तेन पुत्रेण यथैव पुत्री बभूव तथैव स पुत्रो देवानीक आत्मजवत्स-लेन तेन पित्रा पितृमान्बभूव ॥ लोके पितृत्वपुत्रत्वयोः फलमनयोरेवा-सीदित्यर्थः ॥

॥ ११ ॥ पूर्व इति । गुणानामेकनिधिर्यज्वा विधिवदिष्टवांस्तयोः पि-तृपुत्रयोः पूर्वः पिता क्षेमधन्वा आत्मसमे स्वतुल्य आत्मोद्भवे पुत्रे देवा-नीके चिरोढां चिरं धृतां वर्णचतुष्टयस्य धुरं रक्षाभारं निधाय यजमा-नलोकं यष्टृलोकं नाकं जगाम ॥

वशी सुतस्तस्य वशंवदत्वात्
स्वेषामिवासीद्द्विषतामपीष्टः ।
सकृद्विविग्नानपि हि प्रयुक्तं
माधुर्यमीष्टे हरिणान्ग्रहीतुम् ॥ १२ ॥
अहीनगुर्नाम स गां समग्राम्
अहीनबाहुद्रविणः शशास ।
यो हीनसंसर्गपराङ्मुखत्वाद्
युवाप्यनर्थैर्व्यसनैर्विहीनः ॥ १३ ॥
गुरोः स चानन्तरमन्तरज्ञः
पुंसां पुमानाद्य इवावतीर्णः ।

॥ १२ ॥ वशीति । तस्य देवानीकस्य वशी समर्थः सुतः अहीनगुर्नाम वक्ष्यमाणनामकः । वशं वशकरं मधुरं वदतीति वशंवदः ॥ प्रियवशे वदः खजिति खच्प्रत्ययः ॥ तस्य भावस्तत्त्वम् । तस्मादिष्टवादित्वात्स्वेषामिव द्विषतामपीष्टः प्रिय आसीत् । अर्थादेवानीकनिर्धारणं लभ्यते ॥ तथा हि । प्रयुक्तमुच्चारितं माधुर्यं सकृदेकवारं विविग्नान्भीतानपि हरिणान्ग्रहीतुं वशीकर्तुमीष्टे शक्नोति ॥

॥ १३ ॥ अहीनगुरिति । अहीनबाहुद्रविणः समग्रभुजपराक्रमः ॥ द्रविणं काञ्चनं वित्तं द्रविणं च पराक्रम इति विश्वः ॥ हीनसंसर्गपराङ्मुखत्वान्नीचसंसर्गरहितत्वाद्धेतोर्युवाप्यनर्थैरनर्थकैर्व्यसनैः पानद्यूतादिभिर्विहीनो रहितो योहीनगुर्नाम स पूर्वोक्तो देवानीकसुतः समग्रां सर्वां गां भुवं शशास ॥

॥ १४ ॥ गुरोरिति । पुंसामन्तरज्ञो विशेषज्ञश्चतुरो निपुणः सोहीनगुश्च गुरोः पितुरनन्तरम् । अवतीर्णो भुवं प्राप्त आद्यः पुमान्विष्णुरिव ।

उपक्रमैरस्खलितैश्चतुर्भिश्
चतुर्दिगीशश्चतुरो बभूव ॥ १४ ॥
तस्मिन्प्रयाते परलोकयात्रां
जेतर्यरीणां तनयं तदीयम् ।
उच्चैःशिरस्त्वाज्जितपारियात्रं
लक्ष्मीः सिषेवे किल पारियात्रम् ॥ १५ ॥
तस्याभवत्सूनुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः ।
जितारिपक्षोपि शिलीमुखैर्यः
शालीनतामव्रजदीड्यमानः ॥ १६ ॥
तमात्मसंपन्नमनिन्दितात्मा

अस्खलितैरप्रतिहतैश्चतुर्भिरुपक्रमैः सामाद्युपायैः ॥ सामादिभिरुपक्रमैरिति मनुः ॥ चतुर्दिगीशश्चतसृणां दिशामीशो बभूव ॥

॥ १५ ॥ तस्मिन्निति । अरीणां जेतरि तस्मिन्नहीनगौ परलोकयात्रां प्रयाते प्राप्ते सति उच्चैःशिरस्त्वादुन्नतशिरस्कत्वाज्जितः पारियात्रः कुलशैलविशेषो येन तं पारियात्रं पारियात्राख्यं तदीयं तनयं लक्ष्मी राज्यलक्ष्मीः सिषेवे किल ॥

॥ १६ ॥ तस्येति । तस्य पारियात्रस्योदारशीलो महावृत्तः ॥ शीलं स्वभावे सद्वृत्त इत्यमरः ॥ शिलापट्टविशालवक्षाः शिलः शिलाख्यः सूनुरभवत् । यः सूनुः शिलीमुखैर्बाणैः ॥ अलिबाणौ शिलीमुखावित्यमरः ॥ जितारिपक्षोपीड्यमानः स्तूयमानः सन् शालीनतामधृष्टतां लज्जामव्रजदगच्छत् ॥ स्यादधृष्टे तु शालीन इत्यमरः ॥ शालीनकौपीने अधृष्टाकार्ययोरिति निपातः ॥

॥ १७ ॥ तमिति । अनिन्दितात्मागर्हितस्वभावः स पारियात्र आ-

कृत्वा युयानं युवराजमेव ।
सुखानि सोऽभुङ्क्त सुखोपरोधि
वृत्तं हि राज्ञामुपरुद्धवृत्तम् ॥ १७ ॥
तं रागबन्धिष्ववितृप्तमेव
भोगेषु सौभाग्यविशेषभोग्यम् ।
विलासिनीनामरतिक्षमापि
जरा वृथा मत्सरिणी जहार ॥ १८ ॥
उन्नाभ इत्युद्गतनामधेयस्
तस्यायथार्थोन्नतनाभिरन्ध्रः ।

त्मसंपन्नं बुद्धिसंपन्नम् ॥ आत्मा जीवो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चे-त्युभयत्राप्यमरः ॥ युवानं तं शिलं युवराजं कृत्वैव सुखान्यभुङ्क्त । न त्वकृत्वेत्येवकारार्थः ॥ किमर्थं युवराजशब्दकरणमित्याशङ्क्यान्यथा सुखोपभोगो दुर्लभ इत्याह सुखोपरोधीति । हि यस्माद्राज्ञां वृत्तं प्रजापालनादिरूपं सुखोपरोधि बहुलत्वात्सुखप्रतिबन्धकम् । अत एवोपरुद्धवृत्तम् ॥ उपरुद्धसदृशमित्यर्थः ॥ उपरुद्धः कारादिबद्धः । स्वयमूढभारस्य सुखं नास्तीति भावः ॥

॥ १८ ॥ तमिति । रागं बध्नन्तीति रागबन्धिनः । रागप्रवर्तका इत्यर्थः । तेषु भोगेषु विषयेष्ववितृप्तमेव सन्तं किं च विलासिनीनां भोक्त्रीणां सौभाग्यविशेषेण सौन्दर्यातिशयेन हेतुना भोग्यं भोगार्हम् ॥ चजोः कुघिण्ण्यतोरिति कुत्वम् ॥ तं पारियात्रं रातिक्षमा न भवतीत्यरतिक्षमापि अत एव वृथा मत्सरिणी रतिक्षमासु । विलासिनीष्वित्यर्थः । जरा जहार वशीचकार ॥

॥ १९ ॥ उन्नाभ इति । तस्य शिलस्य उन्नाभ इत्युद्गतनामधेयः प्रसिद्धनामायथार्थं यथा तथोन्नतं नाभिरन्ध्रं यस्य सः । गम्भीरनाभि-

सुतोभवत्पङ्कजनाभकल्पः
कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ १९ ॥
ततः परं वज्रधरप्रभावस्
तदात्मजः संयति वज्रघोषः ।
बभूव वज्राकरभूषणायाः
पतिः पृथिव्याः किल वज्रणाभः ॥ २० ॥
तस्मिन्गते द्यां सुकृतोपलब्धां
तत्संभवं शङ्खणमर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे
रत्नोपहारैरुदितैः खनिभ्यः ॥ २१ ॥

रित्यर्थः ॥ तदुक्तम् । स्वरः सत्त्वं च नाभिश्च गम्भीरस्त्रिषु शस्यते ॥ पङ्कजनाभकल्पो विष्णुसदृशः कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधानम् ॥ नाभिः प्रधाने कस्तूरीमदेपि क्वचिदीरित इति विश्वः ॥ सुतोभवत् । अच्प्रत्यन्ववपूर्वात्सामलोम्न इत्यत्राजिति योगविभागादुन्नाभवज्रनाभादयः सिद्धाः ॥

॥ २० ॥ तत इति । ततः परं वज्रधरप्रभाव इन्द्रतेजाः संयति संग्रामे वज्रघोषः अशनितुल्यध्वनिर्वज्रणाभो नाम तस्योन्नाभस्यात्मजो वज्राणां हीराणामाकराः खनय एव भूषणानि यस्यास्तस्याः पृथिव्याः पतिर्बभूव किल खलु ॥ वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदेप्यशनावासनान्तर इति केशवः ॥

॥ २१ ॥ तस्मिन्निति । तस्मिन्वज्रणाभे सुकृतोपलब्धां सुधर्मार्जितां द्यां स्वर्गं गते सत्युत्खातशत्रुमुद्धृतारिं शङ्खणं नाम तत्संभवं तदात्मजमर्णवान्ता वसुधा खनिभ्य आकरेभ्य उदितैरुत्पन्नै रत्नोपहारैरुत्कृष्टवस्तुसमर्पणैरुपतस्थे सिषेवे ॥ जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयत इत्युक्तम् ॥

तस्यावसाने हरिदश्वधामा
पित्र्यं प्रपेदे पदमश्विरूपः ।
वेलातटेषूषितसैनिकाश्वं
पुराविदो यं व्युषिताश्वमाहुः ॥ २२ ॥
आराध्य विश्वेश्वरमीश्वरेण
तेन क्षितेर्विश्वसहो विजज्ञे ।
पातुं सहो विश्वसखः समग्रां
विश्वंभरामात्मजमूर्तिरात्मा ॥ २३ ॥
अंशे हिरण्याक्षरिपोः स जाते
हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां

॥ २२ ॥ तस्येति । तस्य शङ्खणस्यावसानेन्ते हरिदश्वधामा सूर्यतेजाः । अश्विनोरिव रूपमस्येत्यश्विरूपोतिसुन्दरः । तत्पुत्र इति शेषः पित्र्यमिति संबन्धपदसामर्थ्यात् । पित्र्यं पदं प्रपेदे ॥ वेलातटेषूषिता निविष्टाः सैनिकाश्वा यस्य तम् । अन्वर्थनामानमित्यर्थः । यं पुत्रं पुराविदो वृद्धा व्युषिताश्वमाहुः ॥

॥ २३ ॥ आराध्येति । तेन क्षितेरीश्वरेण व्युषिताश्वेन विश्वेश्वरं काशीपतिमाराध्योपास्य विश्वसहो नाम विश्वसखः समग्रां सर्वां विश्वंभरां भुवं पातुं रक्षितुं सहत इति सहः क्षमः ॥ पचाद्यच् ॥ आत्मजमूर्तिः पुत्ररूप्यात्मा स्वयमेव ॥ आत्मा वै पुत्रनामासीति श्रुतेः ॥ विजज्ञे सुषुवे ॥ विपूर्वो जनिर्गर्भविमोचने वर्तते ॥ यथाह भगवान्पाणिनिः । समां समां विजायत इति ॥

॥ २४ ॥ अंश इति । नयज्ञो नीतिज्ञः स विश्वसहः । हिरण्याक्ष-

हिरण्यरेता इव सानिलोभूत् ॥ २४ ॥
पिता पितॄणामनृणस्तमन्ते
वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं
कृत्वा कृती वल्कलवान्बभूव ॥ २५ ॥
कौशल्य इत्युत्तरकोशलानां
पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतः सुतोभून्
नेत्रोत्सवः सोम इव द्वितीयः ॥ २६ ॥
यशोभिराब्रह्मसभं प्रकाशः
स ब्रह्मभूयं गतिमाजगाम ।

रिपोर्विष्णोरंशे हिरण्यनाभे स्वाम्नि तनये जाते सति । तरूणां सानिलो हिरण्यरेता हुतभुगिव । द्विषां सुतरामसह्योभूत् ॥

॥ २५ ॥ पितेति । पितॄणामनृणः । निवृत्तपितृऋण इत्यर्थः ॥ प्रजया पितृभ्य इति श्रुतेः ॥ अत एव कृती । कृतकृत्य इत्यर्थः । पिता विश्वसहोन्ते वयसि वार्द्धकेनन्तान्यविनाशानि सुखानि लिप्सुः । मुमुक्षुरित्यर्थः । आजानुविलम्बिबाहुं दीर्घबाहुम् । भाग्यसंपन्नमिति भावः । तं हिरण्यनाभं राजानं कृत्वा वल्कलवान्बभूव । वनं गत इत्यर्थः ॥

॥ २६ ॥ कौशल्य इति । उत्तरकोशलानां पत्युः पतङ्गान्वयभूषणस्य सूर्यवंशाभरणस्य सोमसुतः सोमं सुतवतः । यज्वन इत्यर्थः ॥ सोमे सुञ इति क्विप् ॥ तस्य हिरण्यनाभस्य द्वितीयः सोमश्चन्द्र इव नेत्रोत्सवो नयनानन्दकरः कौशल्य इति प्रसिद्ध औरसो धर्मपत्नीजः सुतोभूत् ॥

॥ २७ ॥ यशोभिरिति । आ ब्रह्मसभाया आब्रह्मसभं ब्रह्मसदनपर्यन्तम् ॥ अभिविध्यावव्ययीभावः ॥ यशोभिः प्रकाशः प्रसिद्धः स कौश-

ब्रह्मिष्ठमाधाय निजेधिकारे
ब्रह्मिष्ठमेव स्वतनुप्रसूतम् ॥ २७ ॥
तस्मिन्कुलापीडनिभे विपीडं
सम्यग्महीं शासति शासनाङ्काम् ।
प्रजाश्चिरं सुप्रजसि प्रजेशे
ननन्दुरानन्दजलाविलाक्ष्यः ॥ २८ ॥
पात्रीकृतात्मा गुरुसेवनेन
स्पष्टाकृतिः पत्त्ररथेन्द्रकेतोः ।

स्योतिशयेन ब्रह्मवन्तं ब्रह्मिष्ठम् । ब्रह्मविदमित्यर्थः ॥ ब्रह्मशब्दान्मतुवन्तादिष्ठन्प्रत्यये विन्मतोर्लुगिति मतुपो लुक् । नस्तद्धित इति टिलोपः ॥ ब्रह्मिष्ठं ब्रह्मिष्ठाख्यं स्वतनुप्रसूतं स्वात्मजमेव निजे स्वकीयेधिकारे प्रजापालनकृत्य आधाय निधाय । ब्रह्मणो भावो ब्रह्मभूयं ब्रह्मत्वं तदेव गतिः । तामाजगाम । मुक्तोभूदित्यर्थः ॥ स्याद्ब्रह्मभूयं ब्रह्मत्वमित्यमरः ॥ भुवो भावे क्यप् ॥

॥ २८ ॥ तस्मिन्निति । कुलापीडनिभे कुलशेखरतुल्ये ॥ वैकक्षकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरावित्यमरः ॥ सुप्रजसि सत्संतानवति ॥ असिच्प्रत्ययः समासान्तः ॥ तस्मिन्प्रजेशे प्रजेश्वरे ब्रह्मिष्ठे शासनाङ्कां शासनचिह्नां महीं विपीडं निर्बाधं सम्यक्शासति सति आनन्दजलाविलाक्ष्य आनन्दबाष्पाकुलनेत्राः प्रजाश्चिरं ननन्दुः ॥

॥ २९ ॥ पात्रीकृतेति । गुरुसेवनेन पित्रादिशुश्रूषया पात्रीकृतात्मा योग्यीकृतात्मा ॥ योग्यभाजनयोः पात्रमित्यमरः ॥ पत्त्ररथेन्द्रकेतोर्गरुडध्वजस्य स्पष्टाकृतिः स्पष्टवपुः। तत्सरूप इत्यर्थः ॥ आकृतिः कथिता रूपे सामान्यवपुषोरपीति विश्वः ॥ पुष्करपत्त्रनेत्रः पद्मदलाक्षः पुत्रः पुत्राख्यो राजा ॥ यद्वा पुत्रशब्द आवर्तनीयः । पुत्रः पुत्राख्यः पुत्रः

तं पुत्रिणां पुष्करपत्रनेत्रः
पुत्रः समारोपयदग्रसंख्याम् ॥ २९ ॥

वंशस्थितिं वंशकरेण तेन
संभाव्य भावी स सखा मघोनः ।
उपस्पृशन्स्पर्शनिवृत्तलौल्यस्
त्रिपुष्करेषु त्रिदशत्वमाप ॥ ३० ॥

तस्य प्रभानिर्जितपुष्परागं
पौष्यां तिथौ पुष्यमसूत पत्नी ।
तस्मिन्नपुष्यन्नुदिते समग्रां
पुष्टिं जनाः पुष्य इव द्वितीये ॥ ३१ ॥

सुतः ॥ तं ब्रह्मिष्ठं पुत्रिणामग्रसंख्यां समारोपयत् । अग्रगण्यं चकारेत्यर्थः ॥

॥ ३० ॥ वंशेति । स्पृशन्त इति स्पर्शा विषयाः । तेभ्यो निवृत्तलौल्यो निवृत्ततृष्णः अत एव मघोन इन्द्रस्य सखा मित्रं भावी भविष्यन् । स्वर्गं जिगमिषुरित्यर्थः । स ब्रह्मिष्ठो वंशकरेण वंशप्रवर्तकेन तेन पुत्रेण वंशस्थितिं कुलप्रतिष्ठां संभाव्य संपाद्य त्रिषु पुष्करेषु तीर्थविशेषेषु ॥ दिक्संख्ये संज्ञायामिति समासः ॥ उपस्पृशन्स्नानं कुर्वंस्त्रिदशत्वं देवभूयमाप ॥

॥ ३१ ॥ तस्येति । तस्य पुत्राख्यस्य पत्नी पौष्यां पुष्यनक्षत्रयुक्तायां पौर्णमास्यां तिथौ ॥ पुष्ययुक्ता पौर्णमासी पौषीत्यमरः ॥ नक्षत्रेण युक्तः काल इत्यण्प्रत्ययः । टिड्ढाणञित्यादिना ङीप् ॥ प्रभया निर्जितः पुष्परागो मणिविशेषो येन तं पुष्यं पुष्याख्यमसूत । द्वितीये पुष्ये पुष्यनक्षत्र इव तस्मिन्नुदिते सति जनाः समग्रां पुष्टिं वृद्धिमपुष्यन् ॥

मही महेच्छः परिकीर्य सूनौ
मनीषिणे जैमिनयेऽर्पितात्मा ।
तस्मात्सयोगादधिगम्य योगम्
अजन्मनेकल्पत जन्मभीरुः ॥ ३२ ॥
ततः परं तत्प्रभवः प्रपेदे
ध्रुवोपमेयो ध्रुवसंधिरुर्वीम् ।
यस्मिन्नभूज्ज्यायसि सत्यसंधे
संधिर्ध्रुवः संनमतामरीणाम् ॥ ३३ ॥
सुते शिशावेव सुदर्शनाख्ये
दर्शात्ययेन्दुप्रियदर्शने सः ।
मृगायताक्षो मृगयाविहारी

॥ ३२ ॥ महीमिति । महेच्छो महाशयः ॥ महेच्छस्तु महाशय इत्यमरः ॥ जन्मभीरुः संसारभीरुः स पुत्रः सूनौ महीं परिकीर्य विसृज्य मनीषिणे ब्रह्मविद्याविदुषे जैमिनये मुनयेऽर्पितात्मा । शिष्यभूतः सन्नित्यर्थः । सयोगाद्योगिनस्तस्माज्जैमिनेर्योगं योगविद्यामधिगम्याजन्मने जन्मनिवृत्तये मोक्षायाकल्पत समपद्यत ॥ क्लृपेः संपद्यमाने चतुर्थी वक्तव्या ॥ मुक्तोभूदित्यर्थः ॥

॥ ३३ ॥ तत इति । ततः परं स पुष्यः प्रभवः कारणं यस्य स तत्प्रभवः । तदात्मज इत्यर्थः । ध्रुवेणौत्तानपादिनोपमेयः ॥ ध्रुव औत्तानपादिः स्यादित्यमरः ॥ ध्रुवसंधिरुर्वीं प्रपेदे । ज्यायसि श्रेष्ठे सत्यसंधे सत्यप्रतिज्ञे यस्मिन्ध्रुवसंधौ संनमताम् । अनुद्धतानामित्यर्थः । अरीणां संधिर्ध्रुवः स्थिरोभूत् ॥ ततः सार्थं नामेत्यर्थः ॥

॥ ३४ ॥ सुत इति । मृगायताक्षो नृसिंहः पुरुषश्रेष्ठः स ध्रुवसंधिर्दर्शात्ययेन्दुप्रियदर्शने प्रतिपच्चन्द्रनिभे सुदर्शनाख्ये सुते शिशौ सत्येव

सिंहादवापद्द्विपदं नृसिंहः ॥ ३४ ॥
स्वर्गामिनस्तस्य तमैकमत्याद्
अमात्यवर्गः कुलतन्तुमेकम् ।
अनाथदीनाः प्रकृतीरवेक्ष्य
साकेतनाथं विधिवच्चकार ॥ ३५ ॥
नवेन्दुना तन्नभसोपमेयं
शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मलपुष्करेण
तोयेन चाप्रौढनरेन्द्रमासीत् ॥ ३६ ॥
लोकेन भावी पितुरेव तुल्यः
संभावितो मौलिपरिग्रहात्सः ।

मृगयाविहारी सन्सिंहाद्द्विपदं मरणमवापत् ॥ व्यसनासक्तिरनर्थावहेति भावः ॥

॥ ३५ ॥ स्वरिति । स्वर्गामिनः स्वर्यातस्य तस्य ध्रुवसंधेरमात्यवर्गः। अनाथा नाथहीना अत एव दीनाः शोच्याः प्रकृतीः प्रजा अवेक्ष्य । कुलतन्तुं कुलालम्बनमेकमद्वितीयं तं सुदर्शनमैकमत्याद्विधिवत्साकेतनाथमयोध्याधीश्वरं चकार ॥

॥ ३६ ॥ नवेति । अप्रौढनरेन्द्रं तद्रघोः कुलं नवेन्दुना बालचन्द्रेण नभसा व्योम्ना । शावः शिशुरेकः सिंहो यस्मिन् ॥ पृथुकः शावकः शिशुरित्यमरः ॥ तेन काननेन च । कुड्मलं कुड्मलावस्थं पुष्करं पङ्कजं यस्मिंस्तेन तोयेन च उपमेयमुपमातुमर्हमासीत् । नवेन्द्वाद्युपमानेन तस्य वर्धिष्णुताशौर्यश्रीमत्त्वानि सूचितानि ॥

॥ ३७ ॥ लोकेनेति । स बालो मौलिपरिग्रहात्किरीटस्वीकाराद्धेतोः पितुस्तुल्यः पितृसरूप एव भावी भविष्यति लोकेन जनेनसंभावितस्त-

दृष्टो हि वृण्वन्कलभप्रमाणो-
प्याशाः पुरोवातमवाप्य मेघः ॥ ३७ ॥

तं राजवीथ्यामधिहस्ति यान्तम्
आधोरणालम्बितमग्र्यवेशम् ।
षड्वर्षदेशीयमपि प्रभुत्वात्
प्रैक्षन्त पौराः पितृगौरवेण ॥ ३८ ॥

कामं न सोकल्पत पैतृकस्य
सिंहासनस्य प्रतिपूरणाय ।
तेजोमहिम्ना पुनरावृतात्मा
तद्व्याप चामीकरपिञ्जरेण ॥ ३९ ॥

र्कितः ॥ तथा हि । कलभप्रमाणः कलभमात्रोपि मेघः पुरोवातमवाप्य आशा दिशो वृण्वन्दृष्टो हि ॥

॥ ३८ ॥ तमिति । राजवीथ्यां राजमार्गेधिहस्ति हस्तिनि ॥ विभक्त्यर्थेऽव्ययीभावः ॥ यान्तं गच्छन्तम् । हस्तिनमारुह्य गच्छन्तमित्यर्थः । आधोरणालम्बितं शिशुत्वात्सादिना गृहीतमग्र्यवेशमुदारनेपथ्यं षड्वर्षाणि भूतः षड्वर्षः ॥ तद्धितार्थेत्यादिना समासः । तमधीष्टो भृतो भूतो भावीत्यधिकारे चित्तवति नित्यमिति तद्धितस्य लुक् ॥ ईषदसमाप्तः षड्वर्षः षड्वर्षदेशीयः ॥ ईषदसमाप्तावित्यादिना देशीयप्रत्ययः ॥ तं षड्वर्षदेशीयमपि बालमपि तं सुदर्शनं पौराः प्रभुत्वात्पितृगौरवेण प्रैक्षन्त ॥ पितरि यादृग्गौरवं तादृशैव ददृशुरित्यर्थः ॥

॥ ३९ ॥ काममिति । स सुदर्शनः पैतृकस्य सिंहासनस्य कामं सम्यक्प्रतिपूरणाय नाकल्पत । बालत्वाद्व्याप्तुं न पर्याप्त इत्यर्थः ॥ चामीकरपिञ्जरेण कनकगौरेण तेजोमहिम्ना पुनस्तेजःसंपदा त्वावृतात्मा विस्तारितदेहः संस्तात्सिंहासनं व्याप व्याप्तवान् ॥

तस्मादधः किंचिदिवावतीर्णा-
वसंस्पृशन्तौ तपनीयपीठम् ।
सालक्तकौ भूपतयः प्रसिद्धैर्
ववन्दिरे मौलिभिरस्य पादौ ॥ ४० ॥
मणौ महानील इति प्रभावाद्
अल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो महाराज इति प्रतीतस्
तथैव तस्मिन्युयुजेऽर्भकेऽपि ॥ ४१ ॥
पर्यन्तसंचारितचामरस्य
कपोललोलोभयकाकपक्षात् ।
तस्याननादुच्चरितो विवादश्

॥ ४० ॥ तस्मादिति । तस्मात्सिंहासनादपादानादधः अधोदेशं प्रति किंचिदिवावतीर्णावीषल्लम्बौ तपनीयपीठं काञ्चनपीठमसंस्पृशन्तावल्पकत्वादप्राप्तौ सालक्तकौ लाक्षारसावासिक्तावस्य सुदर्शनस्य पादौ भूपतयः प्रसिद्धैरुन्नतैर्मौलिभिर्मुकुटैर्ववन्दिरे प्रणेमुः ॥

॥ ४१ ॥ मणाविति । अल्पप्रमाणेऽपि मणाविन्द्रनीले प्रभावात्तेजिष्ठत्वाद्धेतोर्महानील इति शब्दो यथा मिथ्या निरर्थको न तथैवार्भके शिशावपि तस्मिन्सुदर्शने प्रतीतः प्रसिद्धो महाराज इति शब्दो न मिथ्या युयुजे ॥

॥ ४२ ॥ पर्यन्तेति । पर्यन्तयोः पार्श्वयोः संचारिते चामरे यस्य तस्य तस्य बालस्य संबन्धिनः कपोलयोर्लोलावुभौ काकपक्षौ यस्य तस्मादाननादुच्चरितो विवादो वचनमर्णवानां वेलास्वपि न चस्खाल । शिशोरपि तस्याज्ञाभङ्गो नासीदित्यर्थः ॥ चपलसंसर्गेऽपि महान्तो न

चस्खाल वेलास्वपि नार्णवानाम् ॥ ४२ ॥

निर्वृत्तजाम्बूनदपट्टबन्धे
न्यस्तं ललाटे तिलकं दधानः ।
तेनैव शून्यान्यरिसुन्दरीणां
मुखानि स स्मेरमुखश्चकार ॥ ४३ ॥

शिरीषपुष्पाधिकसौकुमार्यः
खेदं स यायादपि भूषणेन ।
नितान्तगुर्वीमपि सोऽनुभावाद्
धुरं धरित्र्या बिभरांबभूव ॥ ४४ ॥

न्यस्ताक्षरामक्षरभूमिकायां
कार्त्स्न्येन गृह्णाति लिपिं न यावत् ।

चलन्तीति ध्वनिः ॥ उभयकाकपक्षादित्यत्र वृत्तिविषये उभयपुत्र इतिव-दुभशब्दस्थान उभयशब्दप्रयोग इत्युक्तं प्राक् ॥

॥ ४३ ॥ निर्वृत्तेति । निर्वृत्तो जाम्बूनदपट्टबन्धो यस्य तस्मिन्कृत-कनकपट्टबन्धे ललाटे न्यस्तं तिलकं दधानः स्मेरमुखः स्मितमुखः स राजा अरिसुन्दरीणां मुखानि तेनैव तिलकेनैव शून्यानि चकार । अखिलमपि शत्रुवर्गमवधीदिति भावः ॥

॥ ४४ ॥ शिरीषेति । शिरीषपुष्पाधिकसौकुमार्यः । कोमलाङ्ग इत्यर्थः । अत एव स राजा भूषणेनापि खेदं श्रमं यायाद्गच्छेत् एवंभूतः स नितान्तगुर्वीमपि धरित्र्या धुरं भुवो भारमनुभावात्सामर्थ्याद्बिभरांबभूव बभार ॥ भीह्रीभृहुवां श्लुवच्चेति विकल्पादाम्प्रत्ययः ॥

॥ ४५ ॥ न्यस्तेति । अक्षरभूमिकायामक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखान्यासां लिपिं पञ्चाशद्वर्णात्मिकां मातृकां कार्त्स्न्येन यावन्न गृह्णाति स सुदर्शनस्तावच्छ्रुतवृद्धयोगाद्विद्यावृद्धसंसर्गात्सर्वाणि द-

सर्वाणि तावच्छ्रुतवृद्धयोगात्
फलान्युपायुङ्क्त स दण्डनीतेः ॥ ४५ ॥
उरस्यपर्याप्तनिवेशभागा
प्रौढीभविष्यन्तमुदीक्षमाणा ।
संजातलज्जेव तमातपत्र-
च्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ ४६ ॥
अनश्नुवानेन युगोपमानम्
अबद्धमौर्वीकिणलाञ्छनेन ।
अस्पृष्टखड्गत्सरुणापि चासीद्
रक्षावती तस्य भुजेन भूमिः ॥ ४७ ॥
न केवलं गच्छति तस्य काले

ण्डनीतेर्नीतिशास्त्रस्य फलान्युपायुङ्क्तान्वभूत् । प्रागेव वद्धफलस्य तस्य पश्चादभ्यस्यमानं शास्त्रं संवादार्थमिवाभवदित्यर्थः ॥

॥ ४६ ॥ उरसीति । उरस्यपर्याप्तो निवेशभागो निवासावकाशो यस्याः सा । अत एव प्रौढीभविष्यन्तं वर्धिष्यमाणमुदीक्षमाणा प्रौढवपुष्मान्भविष्यतीति प्रतीक्षमाणा लक्ष्मीः संजातलज्जेव साक्षादालिङ्गितुं लज्जितेव तं सुदर्शनमातपत्रच्छायाच्छलेनोपजुगूह आलिलिङ्ग ॥ छत्त्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः॥प्रौढाङ्गनायाः प्रौढपुरुषालाभे लज्जा भवतीति ध्वनिः॥

॥ ४७ ॥ अनश्नुवानेनेति । युगोपमानं युगसादृश्यमनश्नुवानेनाप्राप्नुवता । अवद्धं मौर्वीकिणो ज्याघातग्रन्थिरेव लाञ्छनं यस्य तेन । अस्पृष्टः खड्गत्सरुः खड्गमुष्टिर्येन तेन॥त्सरुः खड्गादिमुष्टौ स्यादित्यमरः॥ एवंविधेनापि च तस्य सुदर्शनस्य भुजेन भूमी रक्षावत्यासीत् ॥ शिशोरपि तस्य तेजस्तादृगित्यर्थः ॥

॥ ४८ ॥ नेति । काले गच्छति तस्य केवलं शरीरावयवा एव वि-

ययुः शरीरावयवा विवृद्धिम् ।
वंश्या गुणाः खल्वपि लोककान्ताः
प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥ ४८ ॥
स पूर्वजन्मान्तरदृष्टपाराः
स्मरन्निवाक्लेशकरो गुरूणाम् ।
तिस्रस्त्रिवर्गाधिगमस्य मूलं
जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥ ४९ ॥
व्यूह्य स्थितः किंचिदिवोत्तरार्धम्
उन्नद्धचूडोञ्चितसव्यजानुः ।
आकर्णमाकृष्टसबाणधन्वा

वृद्धिं प्रसारं न ययुः । किं तु वंशे भवा वंश्या लोककान्ता जनप्रियाः प्रारम्भे आदौ सूक्ष्मास्तस्य गुणाः शौर्यौदार्यादयोपि प्रथिमानं पृथुत्वमापुः खलु ॥

॥ ४९ ॥ स इति । स सुदर्शनः पूर्वस्मिञ्जन्मान्तरे जन्मविशेषे दृष्टपाराः स्मरन्निव गुरूणामक्लेशकरः सन् । त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः । तस्याधिगमस्य प्राप्तेर्मूलं तिस्रो विद्यास्त्रयीवार्त्तादण्डनीतीः पित्र्याः पितृसंबन्धिनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार ॥ अत्र कौटिल्यः । धर्माधर्मौ त्रय्यामर्थानर्थौ वार्त्तायां नयानयौ दण्डनीत्यामिति ॥ अत्र दण्डनीतिर्नयद्वारा काममूलमिति द्रष्टव्यम् । आन्वीक्षिक्या अनुपादानं त्रय्यन्तर्भावपक्षमाश्रित्य ॥ यथाह कामन्दकः । त्रयी वार्त्ता दण्डनीतिस्तिस्रो विद्या मनोर्मताः । त्रय्या एव विभागोयं येन सान्वीक्षिकी मतेति ॥

॥ ५० ॥ व्यूह्येति । सोस्त्रे धनुर्विद्यायां विनीयमानः शिक्ष्यमाणः अत एवोत्तरार्धं पूर्वकायं किंचिदिव व्यूह्य विस्तार्य स्थितः । उन्नद्धचूड

व्यरोचतास्त्रे स विनीयमानः ॥ ५० ॥

अथ मधु वनितानां नेत्रनिर्वेशनीयं
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।
अकृतकविधि सर्वाङ्गीणमाकल्पजातं
विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५१ ॥

प्रतिकृतिरचनाभ्यो दूतिसंदर्शिताभ्यः
समधिकतररूपाः शुद्धसंतानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः

ऊर्ध्वमुत्कृष्य बद्धकेशः । अञ्चितमाकुञ्चितं सव्यं जानु यस्य स आकर्ण-माकृष्टं सबाणं धनुर्धन्व वा येन स तथोक्तः सन्व्यरोचत । अशोभत ॥

॥ ५१ ॥ अथेति । अथ स सुदर्शनो वनितानां नेत्रैर्निर्वेशनीयं भोग्यम् । नेत्रपेयमित्यर्थः ॥ निर्वेशो भृतिभोगयोरित्यमरः ॥ मधु क्षौद्रम् । रागबन्धोनुरागसंतान एव प्रवालः पल्लवो यस्य तत् । मनसिज एव तरुस्तस्य पुष्पं पुष्पभूतम् । अकृतकविधि अकृत्रिमसंपादनम् । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणम् ॥ तत्सर्वादेरित्यादिना खप्रत्ययः ॥ आकल्पजा-तमाभरणसमूहभूतम् । आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे ॥ विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्धाकरणात्सवि-शेषणमालारूपकमेतत् ॥

॥ ५२ ॥ प्रतिकृतीति । दूतिभिः कन्यापरीक्षणार्थं प्रेषिताभिः संद-र्शिताभ्यो दूतिसंदर्शिताभ्यः प्रतिकृतीनां तूलिकादिलिखितकन्याप्रति-मानां रचनाभ्यो विन्यासेभ्यः ॥ पञ्चमी विभक्त इति पञ्चमी ॥ सम-धिकतररूपाः । चित्रानिर्माणादपि रमणीयनिर्माणा इत्यर्थः । शुद्धसंता-नकामैरमात्यैराहृता आनीता राजकन्या यूनस्तस्य सुदर्शनस्य संबन्धि-न्यौ प्रथमपरिगृहीते श्रीभुवौ श्रीश्च भूश्च ते अधिविविदुराधिविन्ने च-

प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५२ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वंशानुक्रमो नामाष्टादशः सर्गः ॥

क्रुः ॥ आत्मना सपत्नीभावं चक्रुरित्यर्थः ॥ कृतसापत्निकाध्यूढाधिविन्नेत्यमरः ॥

॥ इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीवनीसमाख्यायामष्टादशः सर्गः ॥ १८ ॥

अग्निवर्णमभिषिच्य राघवः
स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः
पश्चिमे वयसि नैमिषं वशी ॥ १ ॥

तत्र तीर्थसलिलेन दीर्घिकास्
तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः
संचिकाय फलनिःस्पृहस्तपः ॥ २ ॥

लब्धपालनविधौ न तत्सुतः

मनसो मम संसारवन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगलं निगडायताम् ॥

॥ १ ॥ अग्निवर्णमिति । श्रुतवतां श्रुतसंपन्नानामपश्चिमः प्रथमो वशी यतेन्द्रियो राघवः सुदर्शनः पश्चिमे वयसि वार्द्धके स्वे पदे स्थानेऽग्नितेजसं तनयमग्निवर्णमभिषिच्य नैमिषं नैमिषारण्यं शिश्रिये श्रितवान् ॥

॥ २ ॥ तत्रेति । तत्र नैमिषे तीर्थसलिलेन दीर्घिका विहारवापीरन्तरितभूमिभिः कुशैस्तल्पं शय्यामुटजेन पर्णशालया सौधवासं विस्मृतो विस्मृतवान्सः ॥ कर्तरि क्तः ॥ फले स्वर्गादिफले निःस्पृहस्तपः संचिकाय संचितवान् ॥

॥ ३ ॥ लब्धेति । तत्सुतः सुदर्शनपुत्रोऽग्निवर्णो लब्धपालनविधौ लब्धस्य राज्यस्य पालनकर्मणि खेदं नाप । अक्लेशेनापालयदित्यर्थः ॥

खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्जितद्विषा
न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥
सोऽधिकारमभिकः कुलोचितं
काश्चन स्वयमवर्तयत्समाः ।
संनिवेश्य सचिवेष्वतःपरं
स्त्रीविधेयनवयौवनोभवत् ॥ ४ ॥
कामिनीसहचरस्य कामिनस्
तस्य वेश्मसु मृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः
पूर्वमुत्सवमपोहदुत्सवः ॥ ५ ॥

कुतः । हि यस्माद्भुजनिर्जितद्विषा गुरुणा पित्रा मेदिन्यस्याग्निवर्णस्य भोक्तुमेव कल्पिता । प्रासाधयितुं न ॥ प्रसाधनं कण्टकशोधनम् । अलंकृतिर्ध्वन्यते ॥ तथा च यथालंकृत्य नीता युवतिः केवलमुपभुज्यते तद्वदिति भावः ॥

॥ ४ ॥ स इति । अभिकः कामुकः ॥ अनुकाभिकाभीकः कमितेति निपातः ॥ कम्रः कामयिताभीकः कमनः कामनोभिक इत्यमरः ॥ सोग्निवर्णः कुलोचितमधिकारं प्रजापालनं काश्चन समाः कतिचिद्वत्सरान्स्वयमवर्तयदकरोत् ॥ अतःपरं सचिवेषु संनिवेश्य निधाय स्त्रीविधेयं स्त्र्यधीनं नवयौवनं यस्य सोभवत् । स्त्र्यासक्तोभूदित्यर्थः ॥

॥ ५ ॥ कामिनीति । कामिनीसहचरस्य कामिनस्तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्मस्वधिकर्द्धिः पूर्वस्मादधिकसंभार उत्तर उत्सवः ऋद्धिमन्तं साधनसंपन्नं पूर्वमुत्सवमपोहदपानुदत् ॥ उत्तरोत्तराधिका तस्योत्सवपरंपरा वृत्तेत्यर्थः ॥

इन्द्रियार्थपरिशून्यमक्षमः
सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन्दिवानिशं
न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥

गौरवाद्यदपि जातु मन्त्रिणां
दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना
केवलेन चरणेन कल्पितम् ॥ ७ ॥

तं कृतप्रणतयोनुजीविनः
कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातप-
स्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८ ॥

॥ ६ ॥ इन्द्रियेति । इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि क्षणान्तरं क्षणभेदं सोढुमक्षमोशक्तः सोग्निवर्णो दिवानिशमन्तरेव विहरन्समुत्सुका दर्शनाकाङ्क्षिणीः प्रजा न व्यपैक्षत नापेक्षितवान् ॥

॥ ७ ॥ गौरवादिति । जातु कदाचिन्मन्त्रिणां गौरवाद्गुरुत्वाद्धेतोः । मन्त्रिवचनानुरोधादित्यर्थः । प्रकृतिभिः प्रजाभिः काङ्क्षितं यदपि दर्शनं ददौ तदपि गवाक्षविवरावलम्बिना केवलेन चरणेन चरणमात्रेण कल्पितं संपादितम् । न तु मुखावलोकनप्रदानेनेत्यर्थः ॥

॥ ८ ॥ तमिति । कोमलेन मृदुलेनात्मनखानां रागेणारुण्येन रूषितं छुरितम् । अत एव नवदिवाकरातपेन स्पृष्टं व्याप्तं यत्पङ्कजं तस्य तुलां साम्यतामधिरोहति प्राप्नोतीति तुलाधिरोहणम् । तं चरणमनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषेविरे ॥

यौवनोन्नतविलासिनीस्तन-
क्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः
स व्यगाहत विगाढमन्मथः ॥ ९ ॥
तत्र सेकहृतलोचनाञ्जनैर्
धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभय-
न्नर्पितप्रकृतिकान्तिभिर्मुखैः ॥ १० ॥
घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ।

॥ ९ ॥ यौवनेति । विगाढमन्मथः प्रौढमदनः सोऽग्निवर्णो यौवनेन हेतुना उन्नतानां विलासिनीस्तनानां क्षोभेणाघातेन लोलानि चञ्चलानि कमलानि यासां ताः । तदम्बुभिस्तासां दीर्घिकाणामम्बुभिर्गूढान्यन्तर्हितानि मोहनगृहाणि सुरतभवनानि यासु ता दीर्घिका व्यगाहत ॥ स्त्रीभिः सह दीर्घिकासु विजहारेत्यर्थः ॥

॥ १० ॥ तत्रेति । तत्र दीर्घिकास्वङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः । रज्यतेनेनेति रागो रागद्रव्यं लाक्षादि । रागस्य परिपाटलोऽङ्गगुणः ॥ गुणे शुक्लादयः पुंसीत्यमरः ॥ धौतो रागपरिपाटलो येषां ते तथोक्ता अधरा येषां तैः । निवृत्तसांक्रमिकरागैरित्यर्थः । अत एवार्पितप्रकृतिकान्तिभिः । अभिव्यञ्जितस्वाभाविकरागैरित्यर्थः । एवंभूतैर्मुखैस्तमग्निवर्णमधिकं व्यलोभयन्प्रलोभितवत्यः ॥

॥ ११ ॥ घ्राणेति । प्रियासखः सोऽग्निवर्णो घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन कर्षिणीर्मनोहारिणीः । रच्यन्त इति रचनाः । पानभूमय एव रचनाः ॥ रचिताः पानभूमय इत्यर्थः ॥ वासितासखः करिणीसह-

अभ्यपद्यत स वासितासखः
पुष्पिताः कमलिनीरिव द्विपः ॥ ११ ॥
सातिरेकमदकारणं रहस्
तेन दत्तमभिलेषुरङ्गनाः ।
ताभिरप्युपहृतं मुखासवं
सोऽपिबद्बकुलतुल्यदोहदः ॥ १२ ॥
अङ्कमङ्कपरिवर्तनोचिते
तस्य निन्यतुरशून्यतामुभे ।
वल्लकी च हृदयंगमस्वना
वल्गुवागपि च वामलोचना ॥ १३ ॥
स स्वयं प्रहतपुष्करः कृती

चरः ॥ वासिता करिणीस्त्रियोरित्यमरः ॥ द्विपः पुष्पिताः कमलिनीरिव । अभ्यपद्यताभिगतः ॥

॥ १२ ॥ सातिरेकेति । अङ्गना रहो रहसि सातिरेकस्य सातिशयस्य मदस्य कारणं तेनाग्निवर्णेन दत्तं मुखासवमभिलेषुः । बकुलेन तुल्यदोहदस्तुल्याभिलाषः ॥ अथ दोहदम् । इच्छाकाङ्क्षा स्पृहेहा तृडित्यमरः ॥ वकुलद्रुमस्याङ्गनामद्यार्थित्वात्तुल्याभिलाषत्वम् ॥ सोऽपि ताभिरङ्गनाभिरुपहृतं दत्तं मुखासवमपिवत् ॥

॥ १३ ॥ अङ्कमिति । अङ्कपरिवर्तनोचिते उत्सङ्गविहारार्हे उभे तस्याग्निवर्णस्याङ्कमशून्यतां पूर्णतां निन्यतुः ॥ के उभे । हृदयंगमस्वना मनोहरध्वनिर्वल्लकी वीणा च वल्गुवाक् मधुरभाषिणी वामलोचना कामिन्यपि च । हृदयं गच्छतीति हृदयंगमः ॥ खच्प्रकरणे गमेः सुप्युपसंख्यानात्खच्प्रत्ययः ॥ अङ्काधिरोपितयोर्वीणावामाक्ष्योर्वाद्यगीताभ्यामरंस्तेत्यर्थः ॥

॥ १४ ॥ स इति । कृती कुशलः स्वयं प्रहतपुष्करो वादितवाद्यमुखो

लोलमाल्यवलयो हरन्मनः ।
नर्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥ १४ ॥
चारु नृत्यविगमे च तन्मुखं
स्वेदभिन्नतिलकं परिश्रमात् ।
प्रेमदत्तवदनानिलः पिब-
न्नत्यजीवदमरालकेश्वरौ ॥ १५ ॥
तस्य सावरणदृष्टसंधयः
काम्यवस्तुषु नवेषु सङ्गिनः ।

लोलानि माल्यानि वलयानि च यस्य स तथोक्तो मनो हरन् । नर्तकीनामिति शेषः । सोऽग्निवर्णोऽभिनयातिलङ्घिनीः । अभिनयेषु स्खलन्तीरित्यर्थः । नर्तकीर्विलासिकाः ॥ शिल्पिनि ष्वुन्निति ष्वुन्प्रत्ययः । षिद्गौरादिभ्यश्चेति ङीष् ॥ नर्तकीलासिके समे इत्यमरः ॥ गुरुषु नाट्याचार्येषु पार्श्ववर्तिषु समीपस्थेषु सत्स्वेवालज्जयल्लज्जामगमयत् ॥

॥ १५ ॥ चार्विति । चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमान्नर्तनप्रयासात्स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्तितमुखमारुतः पिबन् अमराणामलकायाश्चेश्वराविन्द्रकुबेरावत्यजीवदतिक्रम्याजीवत् । ततोऽप्युत्कृष्टजीवित आसीदित्यर्थः ॥ इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥

॥ १६ ॥ तस्येति । उपसृत्य अन्यत्र गत्वा [नवेषु] काम्यवस्तुषु शब्दादिष्विन्द्रियार्थेषु सङ्गिन आसक्तिमतः सततस्तस्य सावरणाः प्रच्छन्ना दृष्टाः प्रकाशाश्च संधयः साधनानि येषु ते समागमाः संगमा वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्धोपभुक्तेन्द्रियार्थाश्चक्रिरे ॥ अत्र गोनर्दीयः। संधिर्द्विविधः । सावरणः प्रकाशश्च । सावरणो भिक्षुक्यादिना प्रकाशः

वल्लभाभिरुपसृत्य चक्रिरे
सामिभुक्तविषयाः समागमाः ॥ १६ ॥
अङ्गुलीकिसलयाग्रतर्जनं
भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं
वञ्चयन्प्रणयिनीरवाप सः ॥ १७ ॥
तेन दूतिविदितं निषेदुषा
पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं
विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥
लौल्यमेत्य गृहिणीपरिग्रहान्
नर्तकीष्वसुलभासु तद्वपुः ।

स्वयमुपेत्य केनापीति ॥ इतः स्वयमुपसृत्य विशेषार्थी तत्र स्थितोनुपजापं स्वयं संधेय इति वात्स्यायनः ॥ अन्यत्र गतं तं कथंचित्संधाय पुनरुपगमायार्धोपभोगेनानिवृत्ततृष्णं चक्रुरित्यर्थः ॥

॥ १७ ॥ अङ्गुलीति । सोग्निवर्णः प्रणयिनीः प्रेयसीर्वञ्चयन्नन्यत्र गच्छन् अङ्गुल्यः किसलयानि तेषामग्राणि तैस्तर्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणं च असकृन्मेखलाभिर्बन्धनं चावाप । अपराधिनो दण्ड्या इति भावः ॥

॥ १८ ॥ तेनेति । सुरतस्य वारो वासरः । तस्य रात्रिषु दूतीनां विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेनाग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः । प्रियश्चासौ जनश्च प्रियजनः । तस्य कातरं वचः प्रियानयनेन मां पाहीत्येवमादि दीनवचनं शुश्रुवे ॥

॥ १९ ॥ लौल्यमिति । गृहिणीपरिग्रहाद्राज्ञीभिः समागमाद्धेतोर्नर्त-

वर्तते स्म स कथंचिदालिख-
न्नङ्गुलीक्षरणसन्नवर्तिकः ॥ १९ ॥
प्रेमगर्विताविपक्षमत्सराद्
आयताच्च मदनान्महीक्षितम् ।
निन्युरुत्सवविधिच्छलेन तं
देव्य उज्झितरुषः कृतार्थताम् ॥ २० ॥
प्रातरेत्य परिभोगशोभिना
दर्शनेन कृतखण्डनव्यथाः ।
प्राञ्जलिः प्रणयिनीः प्रसादयन्
सोऽदुनोत्प्रणयमन्थरः पुनः ॥ २१ ॥

कीषु वेश्यास्वसुलभासु दुर्लभासु सतीषु लौल्यमौत्सुक्यमेत्य प्राप्य अङ्गु-ल्योः क्षरणेन स्वेदनेन सन्नवर्तिको विगलितशलाकः सोऽभिवर्णस्तासां नर्तकीनां वपुस्तद्वपुरालिखन्कथंचिद्वर्तते स्मावर्तत ॥

॥ २० ॥ प्रेमेति । प्रेम्णा स्वविषयेण प्रियस्यानुरागेण हेतुना गर्विते विपक्षे सपत्नजने मत्सराद्वैरादायतात्प्रवृद्धान्मदनाच्च हेतोर्देव्यो राज्य उज्झितरुषस्त्यक्तरोषाः सत्यस्तं महीक्षितमुत्सवविधिच्छलेन महोत्सवकर्म-व्याजेन । कृतोर्थः प्रयोजनं येन स कृतार्थः । तस्य भावं कृतार्थतां निन्युः ॥ मदनमहोत्सवव्याजानीतेन तेन स्वमनोरथं कारयामासुरित्यर्थः ॥

॥ २१ ॥ प्रातरिति । सोऽभिवर्णः प्रातरेत्यागत्य परिभोगशोभिना दर्शनेन हेतुना ॥ दृशेर्ण्यन्ताल्ल्युट् ॥ कृता खण्डनव्यथा याभिस्तास्त-थोक्ताः । खण्डिता इत्यर्थः ॥ तदुक्तम् । ज्ञातेन्यासङ्गविकृते खण्डितेर्ष्या-कषायितेति ॥ प्रणयिनीः प्राञ्जलिः प्रसादयन् तथापि प्रणयमन्थरः प्रणयेन नर्तकीगतेन मन्थरः अलसः । अत्र शिथिलप्रयत्नः सन्नित्यर्थः । पुनरदुनोत्पर्यतापयत् ॥

स्वप्नकीर्तितविपक्षमङ्गनाः
प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिः
क्रोधभिन्नवलयैर्विवर्तनैः ॥ २२ ॥
क्लृप्तपुष्पशयनाँल्लतागृहान्
एत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत्परिजनाङ्गनारतं
सोवरोधभयवेपथूत्तरम् ॥ २३ ॥
नाम वल्लभजनस्य ते मया
प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।

॥ २२ ॥ स्वप्नेति । स्वप्ने प्रकीर्तितो विपक्षः सपत्नजनो येन तं तमग्निवर्णम् । अवदन्त्य एव । त्वया गोत्रस्खलनं कृतमित्यनुपालम्भमाना एव । प्रच्छदस्यास्तरणपटस्यान्ते मध्ये गलिता अश्रुबिन्दवो येषु तैः क्रोधेन भिन्नानि भग्नानि वलयानि येषु तैर्विवर्तनैः पराग्विलुण्ठनैः प्रत्यभैत्सुः प्रतिचक्रुः । तिरश्चक्रुरित्यर्थः ॥

॥ २३ ॥ क्लृप्तेति । सोऽग्निवर्णो दूतिभिः कृतमार्गदर्शनः सन् क्लृप्तपुष्पशयनान् लतागृहानेत्यावरोधादन्तःपुरजनाद्भयेन यो वेपथुः कम्पः तदुत्तरं तत्प्रधानं यथा तथा परिजनाङ्गनारतं दासीरतमन्वभूत् । परिजनश्चासावङ्गना चेति विग्रहः ॥ अत्र ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वत्वं कृतम् । अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरामित्युपदेशात् ॥

॥ २४ ॥ नामेति । मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नाम्नाह्वानं लब्ध्वा तस्य त्वद्वल्लभजनस्य यद्भाग्यम् । तत्परिहासकारणमिति शेषः । तदपि काङ्क्ष्यते ॥ वत हन्त मम मनो लोलुपं गृध्नु । इत्यनेन प्रकारेण गोत्रे नाम्नि विस्खलितं स्खलितवन्तं तमग्निवर्णमूचुः ॥

लोलुपं बत मनो ममेति तं
गोत्रविस्खलितमूचुरङ्गनाः ॥ २४ ॥
चूर्णबभ्रु लुलितस्रगाकुलं
छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्
तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥
स स्वयं चरणरागमादधे

गोत्रं नाम्नि कुले चल इति यादवः ॥ तन्नामलाभे सति तद्भाग्यमपि काङ्क्षति नो मनः । अहो तृष्णा । इति सोल्लुण्ठमुपालभन्तेत्यर्थः ॥

॥ २५ ॥ चूर्णेति । चूर्णबभ्रु चूर्णैर्व्यानतकरणेधोमुखावस्थितायाः स्त्रियाश्चिकुरगलितैः कुङ्कुमादिभिर्बभ्रु पिङ्गलम् ॥ बभ्रु स्यात्पिङ्गले त्रिषु इत्यमरः ॥ लुलितस्रगाकुलं करिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया पतिताभिर्लुलितस्रग्भिराकुलम् । छिन्नमेखलं हरिविक्रमकरणे स्त्रिया उच्छ्रितैकचरणत्वाच्छिन्नमेखलम् । गलितमेखलमित्यर्थः । अलक्तकाङ्कितं धेनुकबन्धे भूतलनिहितकान्ताचरणलाक्षारागरूषितं शयनम् । कर्तृ । उत्थितस्य । शयनादिति भावः । विलासिनस्तस्याग्निवर्णस्य विभ्रमरतानि लीलारतानि । सुरतबन्धविशेषानित्यर्थः । अपावृणोत्स्फुटीचकार ॥ व्यानतादीनां लक्षणं रतिरहस्ये । व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः । तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितस्थिरः ॥ भूगतस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिपदं तदुच्यते ॥ योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयः ॥ न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा । अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिय इति ॥

॥ २६ ॥ स इति । सोऽग्निवर्णः स्वयमेव योषितां चरणयो रागं ला-

योषितां न च तथा समाहितः ।
लोभ्यमाननयनः श्लथांशुकैर्
मेखलागुणपदैर्नितम्बिभिः ॥ २६ ॥
चुम्बने विपरिवर्तिताधरं
हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो
मन्मथेन्धनमभूद्वधूरतम् ॥ २७ ॥
दर्पणेषु परिभोगदर्शिनीर्
नर्मपूर्वमनुपृष्ठसंस्थितः ।
छायया स्मितमनोज्ञया वधूर्
ह्रीनिमीलितमुखीश्चकार सः ॥ २८ ॥

क्षारसमादधेर्पयामास ॥ किं च श्लथांशुकैः । प्रियाङ्गस्पर्शादिति भावः। नितम्बिभिर्नितम्बवद्भिर्मेखलागुणपदैर्जघनैः ॥ पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः ॥ लोभ्यमाननयन आकृष्यमाणदृष्टिः सन् तथा समाहितोवहितो नादधे । यथा सम्यग्रागरचना स्यादिति शेषः ॥

॥ २७ ॥ चुम्बन इति । चुम्बने प्रवृत्ते सति विपरिवर्तिताधरं परिहृतोष्ठम् । रशनाया विघट्टने ग्रन्थिविस्रंसने प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि । इत्थं सर्वतः सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्याग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनमभूत् ॥

॥ २८ ॥ दर्पणेष्विति । सोग्निवर्णो दर्पणेषु परिभोगदर्शिनीः संभोगचिह्नानि पश्यन्तीर्वधूर्नर्मपूर्वं परिहासपूर्वमनुपृष्ठं तासां पृष्ठभागे संस्थितः सन् स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीर्लज्जावनतमुखीश्चकार ॥ तमागतं दृष्ट्वा लज्जिता इत्यर्थः ॥

कण्ठसक्तमृदुबाहुबन्धनं
न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्त शयनोत्थितं प्रियास्
तं निशात्ययविसर्गचुम्बनम् ॥ २९ ॥
प्रेक्ष्य दर्पणतलस्थमात्मनो
राजवेषमतिशक्रशोभिनम् ।
पिप्रिये न स तथा यथा युवा
व्यक्तलक्ष्म परिभोगमण्डनम् ॥ ३० ॥
मित्रकृत्यमपदिश्य पार्श्वतः
प्रस्थितं तमनवस्थितं प्रियाः ।

॥ २९ ॥ कण्ठेति । प्रियाः शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदुबाहुबन्धनं यस्मिंस्तत् । अग्रपादयोः स्वकीययोर्न्यस्ते पादतले यस्मिंस्तत् । निशात्यये विसर्गो विसृज्य गमनं तत्र यच्चुम्बनं तत्प्रार्थयन्त ॥ दुह्याच् इत्यादिना द्विकर्मकत्वम् ॥ अत्र गोनर्दीयः । रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोस्य वास इति ॥

॥ ३० ॥ प्रेक्ष्येति । युवा सोग्निवर्णोतिशक्रं यथा तथा शोभमानमतिशक्रशोभिनं दर्पणतलस्थं दर्पणसंक्रान्तमात्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष यथा व्यक्तलक्ष्म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥

॥ ३१ ॥ मित्रेति । मित्रकृत्यं सुहृत्कार्यमपदिश्य व्याजीकृत्य पार्श्वतः प्रस्थितमन्यतो गन्तुमुद्युक्तमनवस्थितमवस्थातुमक्षमं तमग्निवर्णं प्रियाः हे शठ हे गूढविप्रियकारिन् ॥ गूढविप्रियकृच्छठ इति दशरूपके ॥ तव पलायनस्य छलानि अञ्जसा तत्त्वतः ॥ तत्त्वे त्वद्धाञ्जसा द्वयमित्यमरः ॥ विद्म जानीमः ॥ विदो लटो वेति वैकल्पिको मादेशः ॥ इति । उक्त्वेति

विद्म हे शठ पलायनच्छला-
न्यञ्जसेति रुरुधुः कचग्रहैः ॥ ३१ ॥
तस्य निर्दयरतिश्रमालसाः
कण्ठसूत्रमपदिश्य योषितः ।
अध्यशेरत बृहद्भुजान्तरं
पीवरस्तनविलुप्तचन्दनम् ॥ ३२ ॥
संगमाय निशि गूढचारिणं
चारदूतिकथितं पुरोगताः ।

शेषः । कचग्रहैः केशाकर्षणै रुरुधुः ॥ अत्र गोनर्दीयः । ऋतुस्नाताभि-गमने मित्रकार्ये तथापादि । त्रिष्वेतेषु प्रियतमः क्षन्तव्यो वारगम्ययेति ॥ विरक्तलक्षणप्रस्तावे वात्स्यायनः । मित्रकृत्यं चापदिश्यान्यत्र शेत इति ॥

॥ ३२ ॥ तस्येति । निर्दयरतिश्रमेणालसा निश्चेष्टा योषितः कण्ठ-सूत्रमालिङ्गनविशेषमपदिश्य व्याजीकृत्य पीवरस्तनाभ्यां विलुप्तचन्दनं प्रमृष्टाङ्गरागं तस्याग्निवर्णस्य बृहद्भुजान्तरमध्यशेरत वक्षःस्थले शेरते स्म ॥ कण्ठसूत्रलक्षणं तु । यत्कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निबि-डोपगूढम् । परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्रं प्रवदन्ति सन्तः । इद-मेव रतिरहस्ये स्तनालिङ्गनमित्युक्तम् । तथा हि । उरसि कमितुरुच्चैरा-दिशन्ती वराङ्गी स्तनयुगमुपधत्ते यत्स्तनालिङ्गनं तदिति ॥

॥ ३३ ॥ संगमायेति । संगमाय सुरतार्थं निशि गूढमज्ञातं चरति इष्टगृहं प्रति गच्छतीति गूढचारी । तं चारदूतिकथितम् । चरन्तीति चारा गूढचारिण्यः ॥ ज्वलितिकसन्तेभ्यो ण इति णप्रत्ययः ॥ चाराश्च ता दूत्यश्च चारदूतयः । ताभिः कथितं निवेदितं तमग्निवर्णमङ्गनाः पुरोग्रे गताः । अवरुद्धमार्गाः सत्य इत्यर्थः । हे कामुक तमसा वृतो

वञ्चयिष्यसि कुतस्तमोवृतः
कामुकेति चकृषुस्तमङ्गनाः ॥ ३३ ॥
योषितामुडुपतेरिवार्चिषां
स्पर्शनिर्वृतिमसाववाप्नुवन् ।
आरुरोह कुमुदाकरोपमां
रात्रिजागरपरो दिवाशयः ॥ ३४ ॥
वेणुना दशनपीडिताधरा
वीणया नखपदाङ्कितोरवः ।
शिल्पकार्य उभयेन वेजितास्
तं विजिह्मनयना व्यलोभयन् ॥ ३५ ॥

गूढः सन्कुतो वञ्चयिष्यसि । इति । उपालभ्येति शेषः । चकृषुः ॥ स्ववासं निन्युरित्यर्थः ॥

॥ ३४ ॥ योषितामिति । उडुपतेरिन्दोरर्चिषां भासामिव ॥ ज्वाला भासो न पुंस्यर्चिरित्यमरः ॥ योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन् । किं च रात्रिषु जागरपरः । दिवा दिवसेषु शेते स्वपितीति दिवाशयः ॥ अधिकरणे शेतेरित्यच्प्रत्ययः ॥ असावग्निवर्णः कुमुदाकरस्योपमां साम्यमारुरोह प्राप ॥

॥ ३५ ॥ वेणुनेति । दशनैः पीडिताधरा दष्टोष्ठाः । नखपदैर्नखक्षतैरङ्कितोरवश्चिह्नितोत्सङ्गाः । व्रणिताधरोरुत्वादक्षमा इत्यर्थः । तथापि वेणुना वीणया चेत्युभयेन । अधरोरुपीडाकरेणेत्यर्थः । वेजिताः पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति शिल्पकार्यो गायिकाः ॥ कर्मण्यण्णित्यण् । टिड्ढाणञित्यादिना ङीप् ॥ तं विजिह्मनयनाः कुटिलदृष्टयः । स्वं चेष्टितं जानन्नपि वृथा नः पीडयतीति साभिप्रायं पश्यन्त्य इत्यर्थः । व्यलोभयन् ॥ तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भावः ॥

अङ्गसत्त्ववचनाश्रयं मिथः
स्त्रीषु नृत्यमुपधाय दर्शयन् ।
स प्रयोगनिपुणैः प्रयोक्तृभिः
संजघर्ष सह मित्रसंनिधौ ॥ ३६ ॥
अंसलम्बिकुटजार्जुनस्रजस्
तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत्
कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७ ॥
विग्रहाच्च शयने पराङ्मुखीर्
नानुनेतुमबलाः स तत्वरे ।

॥ ३६ ॥ अङ्गेति । अङ्गं हस्तादि । सत्त्वमन्तःकरणम् । वचनं गेयं चाश्रयः कारणं यस्य तदङ्गसत्त्ववचनाश्रयम् । आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधमित्यर्थः ॥ यथाह भरतः । सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वज इति ॥ नृत्यमभिनयं मिथो रहसि स्त्रीषु नर्तकीषूपधाय निधाय दर्शयन्स मित्रसंनिधौ सहचरसमक्षं प्रयोगेभिनये निपुणैः कृतिभिः प्रयोक्तृभिरभिनयाचार्यैः सह संजघर्ष संघर्षं कृतवान् ॥

॥ ३७ ॥ इतः प्रभृति तस्य तत्तदृतूचितविहारप्रकारमाह ॥ अंसेति । प्रावृष्यंसलम्बिन्यः कुटजानामर्जुनानां कुकुभानां च स्रजो यस्य तस्य । नीपानां कदम्बकुसुमानां रजसाङ्गरागिणो रागवतस्तस्याग्निवर्णस्य प्रमदबर्हिणेषून्मत्तमयूरेषु कृत्रिमाद्रिषु विहारविभ्रमोभूदभवत् । विहार एव विभ्रमो विलासः ॥

॥ ३८ ॥ विग्रहादिति । प्रावृषीत्यनुषज्यते । सोग्निवर्णो विग्रहात्प्रणयकलहाच्छयने पराङ्मुखीरबला अनुनेतुं न तत्वरे त्वरितवान् । किं तु घनशब्देन घनगर्जितेन विक्लवाश्चकिता अत एव विवृत्य स्वयमेवाभि-

आचकाङ्क्ष घनशब्दविक्लवास्
ता विवृत्य विशतीर्भुजान्तरम् ॥ ३८ ॥
कार्त्तिकीषु सवितानहर्म्यभाग्
यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां
मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९ ॥
सैकतं च सरयूं विवृण्वतीं
श्रोणिबिम्बमिव हंसमेखलम् ।
स्वप्रियाविलसितानुकारिणीं
सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥

मुखीभूय भुजान्तरं विशतीः प्रविशन्तीः ॥ आच्छीनद्योर्नुमिति नुमागमविकल्पः ॥ ता अवला आचकाङ्क्ष । स्वयं ग्रहादेव सांमुख्यमैच्छदित्यर्थः ॥

॥ ३९ ॥ कार्त्तिकीष्विति । कार्त्तिकस्येमाः कार्त्तिक्यः ॥ तस्येदमित्यण् ॥ तासु यामिनीषु । शरद्रात्रिष्वित्यर्थः । सवितानान्युपरिवस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक् ॥ भजेर्ण्विप्रत्ययः ॥ हिमनिवारणार्थं सवितानमुक्तम् । ललिताङ्गनासखः सोग्निवर्णः सुरतश्रमापहां मेघमुक्ता च सा विशदा च ताम् ॥ बहुलग्रहणात्सविशेषणसमासः ॥ चन्द्रिकामन्वभुङ्क्त ॥

॥ ४० ॥ सैकतमिति । हंसा एव मेखला यस्य तत्सैकतं पुलिनं श्रोणिबिम्बमिव विवृण्वतीम् । अत एव स्वप्रियाविलसितान्यनुकरोतीति तद्विधां सरयूम् । सौधस्य जालानि गवाक्षाः । त एव विवराणि । तैर्व्यलोकयत् ॥

मर्मरैरगुरुधूपगन्धिभिर्
व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं
हैमनैर्निवसनैः सुमध्यमाः ॥ ४१ ॥

अर्पितस्तिमितदीपदृष्टयो
गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः
साक्षितां शिशिररात्रयो ययुः ॥ ४२ ॥

दक्षिणेन पवनेन संभृतं
प्रेक्ष्य चूतकुसुमं सपल्लवम् ।

॥ ४१ ॥ मर्मरैरिति । मर्मरैः संस्कारविशेषाच्छब्दायमानैः ॥ अथ मर्मरः । स्वनिते वस्त्रपर्णानामित्यमरः ॥ अगुरुधूपगन्धिभिर्व्यक्तहेमरशनैर्लौल्याल्लक्ष्यमाणकनकमेखलागुणैर्हैमनैर्हेमन्ते भवैः ॥ सर्वत्राण् च तलोपश्चेति हेमन्तशब्दादण्प्रत्ययस्तलोपश्च ॥ निवसनैरंशुकैः सुमध्यमाः स्त्रिय एकतो नितम्बैकदेशे आग्रथनमोक्षयोर्नीवीबन्धविस्रंसनयोर्लोलुपमासक्तं तं जह्रुराचकृषुः ॥

॥ ४२ ॥ अर्पितेति । निवाता वातरहिताः कुक्षयोभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेषु अर्पिता दत्ताः स्तिमिता निवातत्वान्निश्चला दीपा एव दृष्टयो याभिस्ताः ॥ अत्रानिमिषदृष्टित्वं च गम्यते ॥ सर्वसुरतान्तरक्षमास्तापस्वेदापनोदत्वाद्दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयस्तस्याग्निवर्णस्य साक्षितां ययुः ॥ विविक्तकालदेशत्वाद्यथेच्छं विजहारेत्यर्थः ॥

॥ ४३ ॥ दक्षिणेनेति । अङ्गना दक्षिणेन पवनेन मलयानिलेन संभृतं जनितं सपल्लवं चूतकुसुमं प्रेक्ष्य अवधूतविग्रहास्त्यक्तविरोधाः

अन्वनैषुरवधूतविग्रहास्
तं दुरुत्सहवियोगमङ्गनाः ॥ ४३ ॥
ताः स्वमङ्कमधिरोप्य दोलया
प्रेङ्खयन्परिजनापविद्धया ।
मुक्तरज्जु निबिडं भयच्छलात्
कण्ठबन्धनमवाप बाहुभिः ॥ ४४ ॥
तं पयोधरनिषिक्तचन्दनैर्
मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे
श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५ ॥
यत्स भग्नसहकारमासवं
रक्तपाटलसमागमं पपौ ।

सत्यो दुरुत्सहवियोगं दुःसहविरहं तमन्वनैषुः ॥ तद्विरहमसहमानाः स्वयमेवानुनीतवत्य इत्यर्थः ॥

॥ ४४ ॥ ता इति । ता अङ्गनाः स्वमङ्कं स्वकीयमुत्सङ्गमधिरोप्य परिजनेनापविद्धया प्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयंश्चालयन्भयच्छलात्पतनभयमिषाद्बाहुभिरङ्गनाभुजैर्निबिडं कण्ठबन्धनमवाप प्राप ॥ स्वयं ग्रहाश्लेषसुखमन्वभूदित्यर्थः ॥

॥ ४५ ॥ तमिति । प्रियाः पयोधरेषु स्तनेषु निषिक्तमुक्षितं चन्दनं येषु तैः । मौक्तिकैर्ग्रथितानि प्रोतानि चारुभूषणानि येषु तैः । मुक्ताप्रायाभरणैरित्यर्थः । श्रोणिलम्बिन्यो मणिमेखला मणिप्रचुररशना येषु तैर्ग्रीष्मवेषविधिभिर्ग्रीष्मोचितनेपथ्यकरणैः । शीतलोपायैरित्यर्थः । तमग्निवर्णं सिषेविरे ॥

॥ ४६ ॥ यदिति । सोऽग्निवर्णः भग्नः सहकारश्चूतपल्लवो यस्मिंस्तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तमासवं मद्यं पपौ । इति

तेन तस्य मधुनिर्गमात्कृशश्
चित्तयोनिरभवत्पुनर्नवः ॥ ४६ ॥
एवमिन्द्रियसुखानि निर्विश-
न्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतून्
अत्यवाहयदनङ्गवाहितः ॥ ४७ ॥
तं प्रमत्तमपि न प्रभावतः
शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसंभवो
दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥
दृष्टदोषमपि तन्न सोत्यजत्

यत्तेनासवपानेन मधुनिर्गमाद्वसन्तापगमात्कृशो मन्दवीर्यस्तस्य चित्तयो-नि: कामः पुनर्नवः प्रबलोभवत् ॥

॥ ४७ ॥ एवमिति । एवमनङ्गवाहितः कामप्रेरितोन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन्ननुभव-न्नात्मनो लक्षणैः कुटजस्रग्धारणादिचिह्नैर्निवेदितान् । अयमृतुरिदानीं वर्तत इति ज्ञापितान् । ऋतून्वर्षादीनत्यवाहयदगमयत् ॥

॥ ४८ ॥ तमिति । प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतोन्यपा-र्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः ॥ रतिरागसंभव आमयो व्याधिस्तु । क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव । अक्षि-णोदकर्शयत् ॥ शापोपि रतिरागसंभव इति । अत्र दक्षः किलान्याः स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप स शाप-श्चाद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥

॥ ४९ ॥ दृष्टेति । भिषजां वैद्यानामनाश्रवो वचसि न स्थितः ॥ वच-

सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्यते ॥ ४९ ॥
तस्य पाण्डुवदनाल्पभूषणा
सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहानिराययौ
कामयानसमवस्थया तुलाम् ॥ ५० ॥
व्योम पश्चिमकलास्थितेन्दु वा
पङ्कशेषमिव घर्मपल्वलम् ।

ने स्थित आश्रव इत्यमरः ॥ अविधेय इत्यर्थः । स दृष्टदोषमपि । रोगजननादिति शेषः । तत्सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् ॥ तथा हि । इन्द्रियगणः स्वादुभिर्विषयैर्हृतस्तु हृतश्चेत्ततस्तेभ्यो विषयेभ्यो दुःखं कृच्छ्रेण निवार्यते । यदि वार्येतेति शेषः ॥ दुस्त्यजाः खलु विषया इत्यर्थः

॥ ५० ॥ तस्येति । तस्य राज्ञः पाण्डुवदना । अल्पभूषणा परिमिताभरणा । सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्यां सा सावलम्बगमना । मृदुस्वना हीनस्वरा । राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोगः । तेन या परिहानिः क्षीणावस्था सा । कामयानः कामयमानः ॥ अनित्यमागमशासनमिति मुमागमाभावः । एतदेवाभिप्रेत्योक्तं वामनेनापि । कामयानशब्दः सिद्धोनादिश्चेति ॥ तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । कालकृतो विशेषोवस्था ॥ विशेषः कालिकोवस्थेत्यमरः ॥

॥ ५१ ॥ व्योमेति । राज्ञि क्षयातुरे सति तत्कुलं रघुकुलं पश्चिमकलायां स्थित इन्दुर्यस्मिंस्तत्कलावशिष्टेन्दु व्योम वा व्योमेव ॥ वाशब्द

रात्रि तत्कुलमभूत्क्षयातुरे
वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥
बाढमेषु दिवसेषु पार्थिवः
कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोस्य मन्त्रिणः
शश्वदूचुरघशङ्किनीः प्रजाः ॥ ५२ ॥
स त्वनेकवनितासखोपि सन्
पावनीमनवलोक्य संततिम् ।
वैद्ययत्नपरिभाविनं गदं
न प्रदीप इव वायुमत्यगात् ॥ ५३ ॥
तं गृहोपवन एव संगताः
पश्चिमक्रतुविदा पुरोधसा ।

इवार्थे । यथाह दण्डी । इववद्वायथाशब्दाविति ॥ पङ्कशेषं घर्मपल्वलमिव वामनार्चिरल्पशिखं दीपभाजनमिव दीपपात्रमिवाभूत् ॥

॥ ५२ ॥ बाढमिति । बाढं सत्यमेषु दिवसेषु पार्थिवः पुत्रजन्मने पुत्रोदयार्थं कर्म इष्ट्यादिकं साधयति । इत्येवमदर्शितरुजो निगूहितरोगाः सन्तोस्य राज्ञो मन्त्रिणोघशङ्किनीर्व्यसनशङ्किनीः प्रजाः शश्वदूचुः ॥

॥ ५३ ॥ स इति । स त्वग्निवर्णोनेकवनितासखः सन्नपि पावनीं पितृऋणमोचनीं सन्ततिमनवलोक्य । पुत्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगम् । प्रदीपो वायुमिव । नात्यगान्नातिचक्राम । ममारेत्यर्थः ॥

॥ ५४ ॥ तमिति । पश्चिमक्रतुविदा अन्तेष्टिविधिज्ञेन पुरोधसा संगताः समेता मन्त्रिणो गृहोपवन एव गृहाराम एव ॥ आरामः स्यादुप-

रोगशान्तिमपदिश्य मन्त्रिणः
संभृते शिखिनि गूढमादधुः ॥ ५४ ॥

तैः कृतप्रकृतिमुख्यसंग्रहैर्
आशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा
प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥

तस्यास्तथाविधनरेन्द्रविपत्तिशोकाद्
उष्णैर्विलोचनजलैः प्रथमाभितप्तः ।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

तं भावाय प्रसवसमयाकाङ्क्षिणीनां प्रजानाम्
अन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।

वनमित्यमरः ॥ रोगशान्तिमपदिश्य शान्तिकर्म व्यपदिश्य तमग्निवर्णं संभृते समिद्धे शिखिन्यग्नौ गूढमप्रकाशमादधुर्निदधुः ॥

॥ ५५ ॥ तैरिति । आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजानपदप्रधानानां संग्रहः संनिपातनं यैस्तादृशैस्तैर्मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहधर्मचारिणी नराधिपश्रियं प्रत्यपद्यत राज्यलक्ष्मीं प्राप ॥

॥ ५६ ॥ तस्या इति । तथाविधया नरेन्द्रविपत्त्या यः शोकस्तस्मादुष्णैर्विलोचनजलैः प्रथममभितप्तस्तस्या गर्भः कनककुम्भानां मुखैर्द्वारैरुज्झितेन शिशिरेण वंशाभिषेकविधिना लक्षणया अभिषेकजलेन निर्वापित आप्यायितः ॥

॥ ५७ ॥ तमिति । प्रसवो गर्भमोचनम् । फलं च विवक्षितम् ॥ स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचन इत्यमरः ॥ तस्य यः समयस्त-

मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा ॥ ५७ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतावग्निवर्ण-शृङ्गारो नामैकोनविंशः सर्गः ॥

दाकाङ्क्षिणीनां प्रजानां भावाय भूतये ॥ भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुष्विति यादवः ॥ क्षितिरन्तर्गूढं नभोवीजमुष्टिमिव । श्रावणमास्युप्तो वीजमुष्टिरिति भावः । मुष्टिशब्दो द्विलिङ्गः ॥ अक्लीवौ मुष्टिमुस्तकाविति यादवः ॥ अन्तर्गूढमन्तर्गतं तं गर्भं दधाना हेमसिंहासनस्थाव्याहताज्ञा राज्ञी मौलैर्मूले भवैर्मूलादागतैर्वा । आप्तैरित्यर्थः । स्थविरसचिवैर्वृद्धामात्यैः सार्धं भर्तू राज्यं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः ॥ अर्हार्थे वतिप्रत्ययः ॥ अशिषच्छास्ति स्म ॥ सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः । शास इदङ्हलोरितीकारः ॥ ५७ ॥

॥ इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशव्याख्यायां संजीवनीसमाख्यायामेकोनविंशः सर्गः ॥ १९ ॥

## CANTO XIV.

P. 408. ST. 2.—ज्ञातौ सुतस्पर्शसुखोपलम्भात्. Conf. Dinakara: "प्राक्पुत्रालिङ्गनसुखस्य परिचितत्वात्सुतस्पर्शसुखस्योपालम्भोनुभवस्तस्माज्ज्ञातौ."—यथाक्रमम्. Vallabha construing this with प्रणतौ, explains, "प्रवृद्धानुक्रमेण चरणपतितौ," *i. e.* each of the princes saluted both the queens according to their seniority, and as Kaus'alyâ was the senior of the two, she was saluted first and after her Sumitrâ by both the princes. This explanation appears to be necessary for a proper understanding of the simile in the following stanza.

P. 409. ST. 3.—बिभेद, 'broke through', 'rushed into'.—गङ्गासरय्वोर्जलमुष्णतप्तम्, 'like the waters [conjoined] of the Gangâ and the Sarayû, heated by summer.' As the heated waters belonged to two rivers, so the hot tears shed on the head of each of the princes proceeded from the eyes of both the ladies.

P. 409. ST. 4.—मार्गान्, 'scars.' lit. passages, viz. through which the darts had entered their persons.

P. 409. ST. 5.—भर्तुः क्लेशावहा अलक्षणाहम् &c. This refers to the popular notion that the misery or prosperity that falls to the lot of a recently married man is attributable to the inauspicious or auspicious qualities of the wife he has just married. Sitâ ascribes to her own inauspicious qualities or bad luck, that soon after her marriage her husband had to go into banishment and that Das'aratha put an end to his own life, thereby leaving the two ladies she addresses in the condition of widows. Conf. Dinakara: "यद्विवाहसमनन्तरं पत्युर्वनवासः श्वशुरस्य स्वर्गस्थित्या च भवत्योर्वैधव्यमासीदित्यात्मनो दुर्लक्षणं सूचितवतीत्यभिप्रायः" ।—अभक्तिभेदेन = तुल्यया भक्त्या, 'with equal reverence.'

P. 410. ST. 6.—ननु तवैव वृत्तेन भर्ता महत्कृच्छ्रं तीर्णः, 'why, was it not [on the contrary] by your virtuous behaviour that your husband was able to come out safe from a great trial?' ननु is derived from the negative particle न and the interrogative particle नु, and introduces a rhetorical question to which an affirmative answer is expected. Dinakara interprets ननु better than Mallinâtha who construes it with उक्तिष्ठ. The former has "सलक्ष्मणोयं तव पतिस्तवैव निःकल्मषेन वृत्तेनाचारेण महत्कृच्छ्रं व्यसनमुत्तीर्णवान्ननु."—प्रियार्हाम्, *i. e.* प्रियवचनयोग्याम् 'who deserved to be addressed kindly.'—प्रियमप्यमिथ्या, 'truly and yet kindly,' referring to the proverbial difficulty of speaking kindly and truly at the same time. Stenzler misunderstands when he translates, "marito dignam atque ipsum ejus maritum."

P. 411. ST. 9.—तावत्, 'already.'—राजेन्द्रनेपथ्यविधानशोभा पुनरुक्तदोषा तस्य उदितासीत्. Translate: 'There arose to him (*i. e.* appeared about him) a splendour, the [only] fault of which was that it was a repetition.' That is, he already appeared so perfectly majestic even with his dress as an anchorite, that his royal dress could add very little to his majestic appearance. Dinakara understands उदित as equivalent to उक्त, from वद् and says, "यो रामस्तपस्विनां वेषस्य क्रियया धारणेनापि तावत्साकल्येन भृशं दर्शनीयोभूत् तस्य राज्ञां नेपथ्यस्यालंकारस्य विधानेन या शोभा सोदिता कथिता पुनरुक्तदोषाभिधानो दोषो यस्यास्तादृशी स्यात् (he appears to have read स्यात् for आसीत्) । तापसवेषाधिकशोभया नृपनेपथ्यशोभाद्वैगुण्येनुमितेपि यदि सा शोभा वर्ण्यते तर्हि पौनरुक्त्यं स्यादित्यर्थः." Mallinâtha's interpretation, however, appears more correct.

P. 411. ST. 11.—सानुजेन सौमित्रिणा. That is, Lakshmaṇa and S'atrughna each held a Chamarî-brush on either side of Râma.

P. 411. ST. 12.—वायुवशेन भिन्ना, 'split by the power of the wind,' as otherwise it (the कालागरुधूमराजिः) would not resemble the *veṇî* of a lady, which consists of three or more braids of hair.—रघूद्वहेन स्वयम्. Conf. Dinakara: "यथा देशान्तरादागतो नायको नायिकाया वेणिं मोचयति."

P. 412. ST. 13.—कर्णीरथस्थाम्. Râmâs'rama, a commentator on the Amarakos'a observes कर्णीरथः पुरुषस्कन्धवाह्यो यानविशेषः चौडाला इति

स्यात:. Mahâdevabhaṭṭa also, the author of another commentary on Amara, gives the same explanation, and the vernacular name चौडाला. So it appears that कर्णीरथ was a conveyance borne on the shoulders of men. A doli? or a palankin?

P. 412. ST. 14.—अनुसूयं शाश्वतमङ्गरागम्. See Adhyâtma Râmâyaṇa Ayodhyâ Kâṇḍa Sarga 9, St. 89: अङ्गरागं च सीतायै ददौ दिव्यं शुभानना (*i. e.* अनुसूया) न त्यक्ष्यतेऽङ्गरागेण शोभा त्वां कमलानने ॥ See also Canto XII. St. 27.—पुन: See above, Canto XII. St. 104 and our note *ad loc.*

P. 413. ST. 15.—बलिमत्, 'furnished with auspicious things' prepared for the purpose. Dinakara appears to have read मणिमत्, for his comment is "मणिमयं गृहम् &c."—आलेख्यशेषस्य, 'of whom all that remained was a picture drawn on the wall.' Conf. Dinakara: "आलेख्यं भित्तिलिखिताकृति: शेषं यस्य" &c.

P. 413. ST. 16.—तच्चिन्त्यमानं सुकृतं तवेति, 'saying, if we ponder over it thine only is that merit whereby' &c. Literally, 'the properly considered merit is thine.' Vallabha quotes the following in elucidation of तच्चिन्त्यमान. "यदुक्तम् । यो वरं वरदो दत्त्वा न करोति च तत्तथा । स याति नरकं घोरं स[ह] पूर्वैर्नै संशय: ।"

P. 413. ST. 17.—यथा चेतसि विस्मयेन क्रान्ता. Conf. above Canto XIII. St. 75, and our note *ad loc.*

P. 414. ST. 18.—सभाजनायोपगतान्, 'who had come to congratulate him.'

P. 414. ST. 20.—पुष्पं दिव:, 'the flower of heaven,' an epithet suggested by its form, the lightness and swiftness of its motion and perhaps by the alliteration that पुष्प affords with पुष्पकम्.—आत्मचिन्तासुलभम्, 'easily obtainable by his own desire', *i. e.* which he was to obtain whenever he should desire it.

P. 415. ST. 22.—कृत्तिकासु. Skanda is represented as the son of the *Krittikás* or Pleiades, whence he is called Kârttikeya. S'iva's semen fell into the Fire, who being unable to bear its splendour, went to Brahmâ; who directed Gangâ to receive it. Gangâ became pregnant with it and bore the embryo on a tuft of S'ara

grass. The group of the nymphs कृत्तिकाः happened to see it:. शरस्तम्बे महात्मानमनलात्मजमीश्वरम् । ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः । तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः । प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा । तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः । परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः । Mahâbhârata S'alyap. Gadâ. Adh. 45, Sts. 2460-63.

P. 415. ST. 23.—तेनार्थवान् लोभपराङ्मुखेन, 'Through him, averse to averice, the people were successful in enriching themselves'.—तेन घ्नता विघ्नभयं क्रियावान्, 'Through him the remover of obstacles the people were successful in the performance of religious works.'—पितृमान्, 'blessed with a father.'—पुत्री, 'blessed with a son.'

P. 416. ST. 25.—संचिन्त्यमानानि, 'when recalled to mind.' Conf. Dinakara: "पूर्वानुभूतं कष्टं स्मारं स्मारं तुष्टाऽभूतामित्यर्थः."

P. 416. ST. 26.—अनक्षरव्यञ्जितदौहृदेन, 'indicating without words [the existence of] pregnancy.'

P. 417. ST. 28.—हिंस्रैर्दष्टनीवारबलीनि, 'in which [morsels of] wild rice offered as oblations [by the ṛishis] are eaten by the ferocious wild beasts.' But cf. Vallabha: "हिंस्रैर्दुष्टसत्त्वैर्दष्टनीवारफलानि वनगजमहिषादिभिः उपभुक्तनीवारशालिफलानि." Dinakara, "हिंस्रैर्दष्टः कवलितो नीवारस्य बलिरुपहारो यत्र तानि." The oblations here referred to were offered to dogs and crows after the sacrifice called Vais'vadeva, and left on the banks of the sacred river for the benefit of those innocent animals, but which were seized by beasts of prey. दष्ट is a difficult word here. It properly means nibbled, gnawed, and not eaten (उपभुक्त); and Vallabha's interpretation, that takes नीवारबलयः to stand for बलित्वेन भविष्यमाणानि यानि शालिस्थानि नीवारफलानि,. *i. e.* the rice not as cooked and ready to be eaten, but paddy as yet on the nîvâra stalks and which were to be hereafter gathered, cooked, and offered *as oblations* बलयः, seems to explain the word दष्ट better than either Mallinâtha or Dinakara.—कुशवन्ति, 'green with Kus'a grass,' "दर्भैर्हरितानि" Vallabha.—संबद्धवैखानसकन्यकानि. Dinakara appears to have read संवृद्धवैखानसकन्यकानि. He comments thus: संवर्धिता वैखानसानां मुनीनां कन्यका यत्र" &c.

P. 418. ST. 31.—विजितारिभद्रः. Dinakara appears to have read विहतारिभद्रः, for he explains, "विहतं दूरीकृतमरीणां भद्रं कल्याणं येन सः" &c. Vallabha interprets like Mallinâtha.

P. 419. ST 33.—विद्द्रे. Dinakara: "प्राक्सीनालग्नमिदानीं पृथगभूदित्यर्थः." Vallabha: "यथा अभितप्तमयो लोहमयोघनेन आहतं सत् विदीर्यते प्रसरति." |

P. 419. ST. 34.—एकपक्षाश्रयविक्लवत्वात् = "एकपक्षनिश्चयसंमूढत्वात् असमर्थत्वात्" according to Vallabha, and Dinakara says, "द्वयोर्मध्ये एकस्य पक्षस्याश्रये यद्विक्लवत्वं भीरुत्वं तस्मात्."—उपेक्षे ... संत्यजानि. All our MSS. read उपेक्षे and संत्यजामि in the text; but it is evident from Mallinâtha's comment उभयत्रापि संप्रश्ने लोट् that his text was उपेक्षै and संत्यजानि. Though, therefore, unsupported by our MSS. we have given these readings in the text on the authority of Mallinâtha. It may be added, however, that Dinakara supports them, at least one of them if not both. He interprets: "आत्मनो निर्वादा[दो?] निन्दा तत्कथं किमुपेक्षे[क्षै?] अथ वा लोकापवादभयाद्दोषां भार्यां त्यजानि | संप्रश्ने लोट् | इति द्वयोः" &c.

P. 420. ST. 37.—राजर्षिवंशस्य. The Râjarshi here referred to is Manu, the ancestor of Râma who founded Ayodhyâ. —पयोदवातादिव दर्पणस्य, 'as a soiling coat attaches to a looking-glass from a gust of the wind when accompanied by rain.' Dinakara paraphrases पयोदवातात् by "पयोदकालीनवातः तस्मात्."

P. 420. ST. 38.—सोऽहं न ईशे,' '*that* I am unable, 'I am, therefore, unable.'—आलानिकं स्थाणुमिव द्विपेन्द्रः. As an elephant, the king of his race, who has never experienced bondage before is unable to bear, *i. e.* does not submit to, a post erected for tying him to.—तत्पूर्वम् 'the first,' 'without a predecessor.' Dinakara dissolves the compound thus, "स एव पूर्वः प्रथमो यत्र तत्पूर्वम्."

P. 421. ST. 40.—किं तु. The reader will observe that though short in itself तु is to be read long as being at the end of a pâda. —भूमेश्छाया शुद्धिमतः शशिनो मलत्वेनारोपिता. The ending of the third pâda is very unusual, as it does not end in a word, but that given in our text is the one commented upon by Mallinâtha ac-

cording to all our MSS. except one (G), which has निरूपिता in the commentary. Vallabha reads शशिनो मलत्वे निरूपिता, "भुवः प्रतिबिम्बिता छाया निर्मलस्येन्दोः कलङ्कत्वे निगदिता." Dinakara too appears not to have read like Mallinâtha, but with Vallabha or very similarly, for he comments thus: "भूमेश्छाया प्रतिबिम्बं शुद्धिमतो निःकलङ्कस्य चन्द्रस्य कलङ्कत्वे लोकैः कल्पिता ननु." May he have read "छाया नु भूमेः शशिनो मलत्वे नारोपिता शुद्धिमतः प्रजाभिः"? The passage as it stands means: 'For the shadow of the Earth is supposed by the people to be a stain of the moon [that is in reality] stainless.' भूमेश्छाया हि प्रजाभिः शुद्धिमतः शशिनो मलत्वेन आरोपिता=भूमेश्छायायां [वस्तुतः] शुद्धिमतो शशिनो मलत्वमारोपितम्. An eclipse of the moon is alluded to. The notion is that it is owing to her own fault or sin that the moon is eclipsed.

P. 422. ST. 42.—करुणार्द्रचित्तैः, "by allowing your hearts to be softened with compassion [for Sîtâ].' Literally, 'by you with your hearts softened with compassion.'—धारयितुं, passive infinitive.

P. 423. ST. 45—दोहदशंसिनी तपोवनेषु स्पृहयालुरेव. (See. above Sts. 26, 28.) That is, दोहदं कथयन्ती तपोवनेषु स्पृहयालुरहमिति शंसन्ती. एव, 'already.' —तद्व्यपदेशनियमितेनां वाल्मीकिपदं प्रापय्य त्यज=तद्व्यपदेशेन नीत्वा वाल्मीकिपदं प्रापय्य [तत्र] त्यज.

P. 423. ST. 46.—मातरि scil. रेणुकायाम्. भार्गवेण प्रहृतम्. See note Canto XI. St. 65.

P. 424. ST. 48.—आत्मन्यसिपत्त्रवृक्षं जातम्, 'become the sword-leafed tree towards her.' In one of the hells, the seventh in number, the Bhâgavata Purâṇa (Skanda V., Adh. 26, Gadya 7) prescribes a forest of Asipattra trees, which those who, except in times of adversity, neglect the rites enjoined by the Vedas and accept doctrines which are not orthodox, have to enter as a penalty for their heresies.

P. 424. ST. 49.—अत्यन्तलुप्तप्रियदर्शनेन. Conf. Dinakara "अत्यन्तं लुप्तं नष्टं प्रियस्य रामस्य दर्शनं यस्य तेन." And Vallabha: "नितान्तत्यक्तपतिसंगमेन." Cf. also Stenzler, "amati adspectu in æternum privato."

P. 425. ST. 50—भवाह्यैरन्तःकरणैः. Dinakara has a different way to Mallinâtha of explaining the plural here : 'आन्तरैरन्तःकरणैर्मनोबुद्ध्य-हंकाराख्यैरन्तःकरणैः." Vallabha : "बुद्धिमानाहंकारैः" The four internal senses, according to the Vârttika on the Vedânta Sûtra are : "मनो-बुद्धिरहंकारश्चित्तं करणमान्तरम् | संशयो निश्चयो गर्वः स्मरणं विषया इमे "

P. 425. ST. 51.—विहास्यन्, 'who was about to desert.'—वनान्ते = वनप्रदेशे, वने.

P. 425. ST. 52.—निषादाहृतनौविशेषः, 'to whom an excellent boat was brought by the ferryman.—संगामिव. 'He crossed the Gangâ, as if he were crossing *i. e.* performing the promise that he had made to his brother of carrying and abandoning Sitâ beyond the Gangâ near the hermitage of Vâlmîki. The play upon ततार should be observed.

P. 426. ST. 53.—औत्पातिको मेघ इव, 'like a cloud breaking down portentously' like a portentous cloud. Dinakara seems to have read औत्पातिकं मेघ इवाश्मवर्षं, for he explains, "यथा मेघ उत्पातसूचकं शिलावर्ष-मुद्गिरति."

P. 426. ST. 55.—ददौ प्रवेशं जननी न तावत्, 'at first her mother did not grant her entrance into her.' That is, although Sitâ threw herself down upon her mother the Earth's person, the latter did not receive her *then* (तावत्) into der bosom as she did afterwards (see Canto XV. Sts. 81-84), as if because she did not know how it was possible that Râma her husband should have deserted her. Conf. Dinakara : "तावदित्यनेनाग्रे प्रवेशं भूर्दास्यतीति ध्वन्यते."

P. 427. ST. 56.—मोहात् , 'than the faint.'—समतप्यतान्तः. The केचित् whose refutation is attempted by Mallinâtha (see commentary) are perhaps right and he is wrong. समतप्यत is not passive but âtmanepada from तप्, of the fourth conjugational class, in which that root is often conjugated both parasmai and âtmane in a sense other than that allowed by the Sûtra तपस्तपःकर्मकस्यैव (Pâṇ. III. 1. 88). The following are a few examples: जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् Rigveda X., 34, 10. उप त्वारातिः सुकृतस्य तिष्ठा-

निवर्तस्व हृदयं तप्यते मे *Ibid.* 95, 17. विपरीतं मया चेदं त्रयं सर्वमुपार्जितम् । तदिमामापदं प्राप्य भृशं तप्यामहे वयम्. Mahâbhârata I, 6217. तप्यसे वाहिनी दृष्ट्वा पार्थेनाभिप्रपीडिताम् *Ibid.* IV. 1668. कामार्थः परिहीणोयं तप्येयं तेन पुत्रकाः *Ibid.* I. 3165. दुःखैर्न तप्येन्न सुखैः प्रहृष्येत्समेन वर्तेत सदैव धीरः *Ibid.* 3585.

P. 428. st. 59.—बिडौजसा विष्णुरिव. Vallabha has, "आदित्यत्वेन हि शक्रस्य विष्णुः कनीयान्." But the reference seems to be to the Upendra or the Dwarf-Incarnation of Vishṇu. Vâmana, the Dwarf, was the son of Aditi, mother of Indra. It is not clear to what legend or legends our poet refers when he alludes to the entire dependence of Vishṇu upon the will of Indra, to whom the former is always represented as being superior.

P. 429. st. 63.—उपस्थितामग्रास्य लक्ष्मीम्, referring to Râma's banishment just as he was going to be crowned.—तदास्पदं प्राप्य. Mallinâtha does not appear to be right in construing त्वद्भवने with आस्पदं प्राप्य. We should either take आस्पदं प्राप्य absolutely in the sense of 'having got the ascendancy' or should translate तदास्पदम्, 'that position' viz. which she wished to gain at first, but was disappointed by Râma's going into banishment. Whatever interpretation we put upon तदास्पदं प्राप्य, त्वद्भवने can only be properly construed when taken with वसन्ती. Dinakara appears to have read त्वदास्पदं or त्वय्यास्पदं प्राप्य, for he interprets, "तया लक्ष्म्या त्वय्यास्पदं स्थानं प्राप्य त्वद्गृहे वसन्ती....न सोढास्मि." Vallabha already reads त्वय्यास्पदं प्राप्य, and interprets "त्वयि आस्पदं स्थानं लब्ध्वा......त्वद्भवने वसन्ती.... अहं न....चक्षमे."

P. 430. st. 65.—किंवा &c. 'or, I would neglect *i. e.* do away with this wretched existence, were I not impeded' &c. Stenzler reads correctly but translates wrongly, as if his reading had been कुर्यामुपेक्षाम्, "putasne me istius vitæ miseræ......rationem esse habituram ?"

P. 431. st. 67.—तपस्विसामान्यम् 'in common with [other] ascetics.' Conf. Dinakara: "यथा अन्ये तापसा रक्ष्यास्तथाहमपीत्यर्थः."—नृपस्य धर्मो मनुना प्रणीतः. See Manu, VII., 17, 35.

P. 432. ST. 69.—वनेपि. अपि rather shows that though the forest was not expected to weep, still indeed it did weep, than that lamentation took place *also* in the palace of Râma.

P. 432. ST. 70.—श्लोकत्वमापद्यत यस्य शोकः. See Râmâyaṇa, Adi. Sarg. 2. St. 17. Gorr. Ed.

P. 432. ST. 71.—इति, 'in the following manner. इति is not infrequently used in reference to what follows. See Canto. XIII. St. 1.

P. 433. ST. 74.—सतां भवोच्छेदकरः पिता ते, 'thy father destroys the transmigration of the virtuous.' Janaka was celebrated as a great philosopher. He is described as a great Brahmavâdî (Uttara Râmacharita Act IV. तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः &c.) or propounder of Brahma. He shows the path and salvation in Adhyâya 328, Mokshadharma, in the S'ântiparva of Mahâbhârata. Cf. "सतां मुमुक्षूणां भवस्य संसारस्य ध्वंसे गुरुः (he appears to have read भवच्छेदगुरुः ) || ब्रह्मविद्योपदेष्टेत्यर्थः."

P. 434. ST. 75.—अनघप्रसूतेस्ते अपत्यसंस्कारमयो विधिः इतो भविष्यति. That is अनघं यथा तथा भूतायाः तव प्रसूतेः प्रसवानन्तरं तव अपत्यस्य जातकर्मादिसंस्काररूपो विधिः अत्र वने भविष्यति.

P. 435. ST. 79.—अनुग्रहप्रत्यभिनन्दिनी, 'receiving the favour with pleasure', or 'thanking him for his kind offer.'

P. 437. ST. 83.—सीतापरिदेवनान्तमनुष्ठितं शासनं शशंस, 'related [how] he had executed his order up to the lamentation of Sîtâ;' *i. e.* related that he had done what he was ordered and everything else that occurred up to and including the lamentation of Sîtâ.

P. 438. ST. 86.—असंघट्टसुखं वसन्ती. Dinakara says, असंघट्टसुखमप्रचलितसुखम् &c., 'happy without fear of loss or separation.' Vallabha reads and comments upon असंबाधसुखम्, "अनुपमर्दसुखं निवसन्ती." Mallinâtha's interpretation is not quite clear. संघट्ट is 'concussion' or 'clash,' hence असंघट्टसुखं, 'in a manner full of beatitude because there was no concussion,' *i. e.* because there was no interference from a rival. Lakshmî seemed to be happy in her exclusive pos-

session of the king. Vallabha's reading serves as an explanation of our reading असंघट्टसुखम्, which is equivalent to असंघट्टमत एव सुखं यथा तथा.

## CANTO XV.

P. 439. ST. 1.—Only one of our Mss., $V_1$., has a नान्दी at the opening of the commentary on Canto XV. The stanza is: अरण्यकं गृहस्थानं श्वरउरौ (श्वशुरौ ?) यद्रज:कणा: स्वयमौद्वाहिकं गेहं तस्मै रा-[मा]-य ते नम:, which is by no means clear, and as none of the other Mss. have any nândî stanza, I have not thought it proper to give the above or a corrected version of it in this edition. It may be that Mallinâtha never wrote a nândî on this canto, though that would be very strange, seeing that he has one on every other canto of the poem.

P. 440. ST. 4.—धर्मसंरक्षणार्थैव. Dinakara quotes the following: "उक्तं च । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' ।"

P. 440. ST. 5.—विशूल: प्रार्थ्यताम्, 'should be surprised when he is not armed with his pike.'

P. 440. ST. 7.—अपवाद इवोत्सर्गं परं व्यावर्तयितुमीश्वर:, 'able to stop the enemy, as any exception is able to stop a general rule.' This refers to an exception or a special rule given

below a general rule as in Pâṇini's system of grammar. Conf. Dinakara: "यथोत्सर्गे कर्मण्यण् इत्यादिसामान्यविधिं निषेद्धुमपवाद आतोनुपसर्गे कः इत्यादिविशेषविधिः शक्तस्तथेत्यर्थः ।" Whatever may be the fitness of the simile as regards the similitude, it certainly cannot be said to be very poetical, being derived altogether from a pedant's life. See also below, note on St. 9.

P. 441. ST. 9.—रामादेशात्, *i. e.* it was not desired by S'atrughna.—पश्चादध्ययनार्थस्य &c. This refers to the root *i* preceded by the preposition अधि, the former, according to the poet and the author of the Mahâbhâshya, being able to signify 'to learn' even without the preposition. Conf. Dinakara: "यथा उपसर्गनिरपेक्षतयैव अर्थवत् इङ् अध्ययन इत्यस्य धातोः पश्चाद्गाम्यधिरुपसर्गो भवति । तथा । रामादेशात्कार्यसिद्धये सैन्यनिरपेक्षतयैवारिनिग्रहशक्तस्य तस्य सेनाङ्गं पश्चाद्गाम्यभवत् ।। यद्यपि धातुरुपसर्गं न व्यभिचरति । उपसर्गस्तु धातुं व्यभिचरत्येवमादि महाभाष्ये धातोरेवार्थत्वादुपसर्गे सद्योतकत्वं निरणायि ।।"

P. 441. ST. 10.—वालखिल्यैरिवांशुमान्. The Vâlakhilyas are certain ṛishis, supposed to be in attendance on the car of the sun. Conf. the Bhâgavata Purâṇa Sk. XII. Adh. 11. वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोमलाः । पुरतोभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ।।

P. 441. ST. 11.—मार्गवशात्, 'on account of his road,' *i. e.* because his road lay by the hermitage of Valmîki as he was passing. Conf. प्रसङ्गवशात्, as occasion or opportunity offers. मार्गवशात् does not mean 'on account of the length of his journey' *propter itineris longitudinem*, as Stenzler translates.—यतः gen. of यन् from इ, to go.

P. 442. ST. 13.—कोशदण्डौ, which are the main stays of a kingdom.

P. 442. ST. 15—मधूपघ्नम्, "मधोर्लवणपितुराश्रयं मु[म?]थुरापुरीम्," Dinakara.—स च....प्राप....कुम्भीनसीजश्च....उपस्थितः, '*as soon as* he arrived, the son of Kumbhînasî came up &c.'

P. 443. ST. 16.—धूमधूम्रः, 'black as smoke,' which was his natural colour as a demon.

P. 444. ST. 20.—सौमित्रेः &c. According to Mallinâtha the translation is: 'But the tree which was shot by the demon, being broken to pieces in its way by the sharp arrows of the son of Sumitrâ, found not [S'atrughna's] person, but [a state of ?] pulverized dust,' *i. e.*, was reduced to that state. But then we ought to have पुष्परजस्त्वम् and not पुष्परजः. The position, besides, of the words गात्रं पुष्परजः प्राप न शाखी would show that पुष्परजः is nominative, not accusative. Dinakara is, therefore, right, who explains :····वृक्षः सौमित्रिगात्रं न प्राप । किं तु वायुवशात्तद्वृक्षपुष्परेणुः प्राप."

P. 444. ST. 22.—ऐन्द्रमस्त्रम्. Indra is the destroyer of Mountains. ऐन्द्रम् = इन्द्रो देवता यस्य तत्.

P. 444. ST. 23.—उत्पातपवनप्रेरितः 'set in motion, by an ominous gust of wind.' उत्पातपवन is a wind that rises as a prodigy. For a description of an उत्पात see Râmâyaṇa Araṇ. Sarg. 29. Gorr. Ed.

P. 444. ST. 24.—कार्ष्णेन, Dinakara's explanation is: "कृष्णं लोहस्तद्विकारेण । यद्वा कृष्णो देवता यस्य तेन."

P. 445. 25.—दिव्याः कुसुमवृष्टयः. The poet supposes that the gods also participated in the joy of the ascetics (आश्रमवासिनः) at the fall of the demon.

P. 445. ST. 27.—चरितार्थैः, 'who had their object fulfilled.'

P. 445. ST. 28.—निर्ममः. There is little to justify this epithet here except its alliteration with निर्ममे.

P. 446. ST. 29.—स्वर्गाभिष्यन्दवमनं कृत्वेव. Dinakara: "स्वर्गस्याभिष्यन्दवमनं शाखानगरं कृत्वेव स्थापिता &c······| अभिष्यन्दवमनं शाखानगरमिति चाणाक्यः." The expression occurs again in Kumâra Sambhava Canto VI. St. 37.

P. 446. ST. 30.—हैमभक्तिमतीम् = स्वर्णशलाकालंकृताम्, according to Dinakara. The हैमभक्तिमत्त्व of the Yamunâ was produced by her being चक्रवाकिनी.

P. 447. ST. 35.—तद्योगात्. The other two commentators are not agreed with Mallinâtha as to the sense of this expression. Dinakara: "भरताद्यास्त्रयोऽप्यपरे तस्य रामस्य योगात् | द्विपुत्ररामसाहचर्यात् पतिव्रत्नीषु पतिव्रतासु पत्नीषु········पुत्रद्वययुक्ता अभूवन् ||." Vallabha: "तद्योगात् | ज्येष्ठानु-

वृत्तिसंबन्धात् ॥ रामानुगादाचरणयोगात् । एतेन च द्विरधिकारत्यभावशङ्कां निरस्यति । प्रजायै गृहमेधिनामिति वाक्यादर्दोषः । सौभ्रात्रमत्र दर्शयति ।" Mallinâtha is right in construing तद्योगात् with पतिवत्नीषु. तद्योगात्पतिवत्नीषु, 'who were pre-eminent as wives by their connection with them,' *i. e.* because they had Bharata &c., for their husbands.

P. 448. ST. 37.—तपोव्ययो मा भूत्. The word व्ययः is here used not in the same sense as in St. 3. above, but in the sense of 'obstacle.' For treating a guest hospitably does not cost any तपस्, but only obstructs its practice for a time.

P. 448 ST. 38.—रथ्यासंस्कारशोभिनीम्. On the decorations here referred to see note to St. 16, Canto. VII.

P. 448. ST. 39.—असामान्यपतिं भुवः, 'the exclusive husband of the Earth,' *i. e.* Râma had not married another wife after his repudiation of Sîtâ.

P. 449. ST. 40.—कालनेमिवधात्. Kâlanemi was, according to the Harivaṁs'a, the son of Hiraṇyakas'ipu, and was a very mighty giant. He had a crown as brilliant as the sun. He was as great as mount Mandâra, and bedecked like it with silver. He had a hundred heads, a hundred arms, a hundred hands, a hundred mouths, and shone like a mountain having a hundred peaks. He was killed by Vishṇu. See Harivaṁs'a 2631 fgg.

P. 449. ST. 41—प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात्, 'being ordered [not to tell] by the first of Poets, who wished to communicate it himself in [due] time.'

P. 449. ST. 43.—या त्वं, 'since thou.'—कष्टात्कष्टतरं गता, 'thou hast fallen from the frying pan into the fire.' The कष्ट was that the Earth was bereft of Das'aratha.

P. 450. ST. 45.—यानं सस्मार. See above St. 20 Canto. XIV.

P. 450. ST. 46.—गूढरूपा सरस्वती, 'Sarasvatî with her form concealed,' *i. e.* the goddess Sarasvatî, that presides over language.

P. 450. ST. 49.—वृक्षशाखावलम्बिनम्, *i. e.* with his head turned down towards the Earth.

P. 451. ST. 51.—तपस्यनधिकारित्वात्प्रजानामघावहम्. S'ûdras are not entitled to practise penance. Conf. S'ûdrakamalâkara, p. 12 Bombay Ed. But it does not appear that the practice of it by the unprivileged leads to evil consequences to the innocent subjects of the king.

P. 451 ST. 52.—ज्योतिष्कणाहतश्मश्रु. His mustache was burned by the flames of the fire over which he hanged himself head downwards.

P. 451. ST. 53.—तपसा दुश्चरेणापि &c., 'but not by his mortification, which though practised with difficulty, nevertheless involved a transgression of the path belonging to him [as a S'ûdra.'

P. 451. ST. 54.—मार्गसंदर्शितात्मना, 'who showed himself in the road', मार्गे संदर्शित आत्मा येन स तेन. That is, Agastya met Râma on the road. Râma did not go to his Âs'rama.

P. 452. ST. 55.—अलंकारं ददौ. See Râmâyaṇa, Uttara Kâṇḍa, Adh. 76 St. 30. The ornament was a wristlet, the same that Kus'a subsequently dropped in the waters of the S'arayû. See Canto XVI. Sts. 72, 73.—पीतेनेव. See Canto VI. St. 61., note *ad loc.*

P. 453. ST. 59.—ज्योतिर्मयानि धिष्ण्यानि. Certain ṛishis are identified with the presiding deities of certain stars. Agastya, *e. g.*, is identified with the principal star in the southern constillation of *canopus.* The *seven Ṛishis* are also identified with the seven stars of the *Ursa Major.* The poet means that not only ṛishis who resided on Earth, but also those, like Agastya and the *seven Ṛishis,* who resided in the stars, that go by their names, came down to attend the sacrifice.

P. 453. ST. 60.—सृष्टलोकैव सद्यः पैतामही तनुः. Usually the genesis of the creation is not ascribed to the four mouths of Brahmâ, but to *Kas'yapa* the patriarch, who was born of the mind of Brahmâ. Brahmâ's four mouths are usually supposed to have given

birth to the four Vedas. In our stanza the poet either refers to a legend which is not generally known or draws upon his own imagination. The former is the more likely supposition.

P. 453. st. 61.—प्राग्वंशवासिनः. Prâgvams'a is the name of a maṇḍapa or sacrificial shed erected to the east of the principal maṇḍapa of a sacrifice. The *dîkshita*, or person who has taken the sacrificial vow, is enjoined to be in the *prâgvams'a*, which is always detached from the other maṇḍapa.

P. 454. st. 63.—प्राचेतसोपज्ञम्. Vâlmîki was the son of Prachetas, a name of Varuṇa. See Râmâyaṇa, Uttara Kâṇḍa Adh. 16. St. 18. प्रचेतसोहं दशमः पुत्रो राघवनन्दन &c.

P. 455. st. 67.—वयोवेषविसंवादि, 'which disagreed, *i. e.* failed, only as to their age and dress.'—नाक्षिकम्पम्, 'without twinkling their eyes.'

P. 455. st. 69.—गेये को नु &c. The commentary given in our edition is supported by all our Mss. From it it is clear that Mallinâtha first states the reading गेये को नु विनेता वां कस्य चेयं कृतिः कवेः, and then taking it as his text, interprets the verse, instead of commenting upon what he had in his text, and mentioning the other reading simply as a *varia lectio.* It is evident therefore that गेये केन विनीतौ वाम् was the text before Mallinâtha, who either changed it to गेये को नु विनेता वाम् or adopted it as changed by some one else before his time. Mallinâtha's difficulty appears to have been the word वाम्. Dinakara does not appear to have known the reading chosen by Mallinâtha. For he begins his comment on the stanza thus : वामिति पदैकदेशप्रयोगो यथा सत्या सत्यभामा भीमो भीमसेनः। वां युवां गेये केन शिक्षितौ। कस्य कवेरियं कृतिः।.........वां युवयोः संबन्धिनः कस्य कवेरिति केचिद्व्याचक्षिरे। वां युवयोर्मध्ये कस्येत्यपरे।..........केन विनीतिवांमिति पाठो युक्त इति दक्षिणावर्तः॥ Vallabha comments upon the text गेये केन विनीतौ वाम् and notices no other reading.

P. 455. st. 70.—उरीकृत्यात्मनो देहम्, 'keeping for himself his own person only;' lit. 'accepting for himself his person'. आत्मनः should be construed not with देहम्, but with उरीकृत्य. For this

